# श्रीमद्भगवद्गीतायाः

## विज्ञानभाष्यम्

(काण्डचतुष्टयात्मकम्)

जयपुरराजसभा-प्रधानपण्डित-वेदरहस्योद्घाटनप्रवण—
महामहोपदेशक-समीक्षाचक्रवर्त्ति—
विद्यावाचस्पति-श्रीमधुसूदनशर्म्म—
मैथिल-प्रणीतम्।

---

तत्रेदं
प्रथमं रहस्यकाण्डम्।

जयपुरमहाराजसंस्कृतकालेजाध्यक्ष-
म० म० श्रीगिरिधरशर्म्मचतुर्वेदेन
संपादितम्।

---

श्रीजयपुरराज्य की सहायता से इलाहाबाद
लॉ जर्नल प्रेस, इलाहाबाद में छपवा
कर प्रकाशित किया गया।

वि० सं० १९९३

# श्रीमद्भगवद्गीतायाः

## विज्ञानभाष्यम्

( काण्डचतुष्टयात्मकम् )

जयपुरराजसभा-प्रधानपण्डित-वेदरहस्योद्घाटनप्रवण—
महामहोपदेशक-समीक्षाचक्रवर्त्ति—
विद्यावाचस्पति-श्रीमधुसूदनशर्म्म—
मैथिल-प्रणीतम् ।



---

तत्रेदं
प्रथमं रहस्यकाण्डम् ।

जयपुरमहाराजसंस्कृतकालेजाध्यक्ष
म० म० श्रीगिरिधरशर्म्मचतुर्वेदेन
संपादितम्

---

श्रीजयपुरराज्य की सहायता से इलाहाबाद
लॉ जर्नल प्रेस, इलाहाबाद में छपवा
कर प्रकाशित किया गया ।

वि० सं० १९९३

# सारांश

## १—प्रथम रहस्य काण्ड।

इसके आरम्भमें भगवद्-गीता-उपनिषत-तीनों शब्दों की रोचक और मौलिक व्याख्या है। गीता का उपदेश मौलिक है यह सिद्ध किया गयाहै। गीता को उपनिषत क्यों कहाजाता है? इस पर प्रकाश डाला गया है। गीता विज्ञान शास्त्र है यह प्रतिज्ञा और इसका उपपादन है। आगे गीता तात्पर्य दिखाते हुए उपनिषदादि वाक्यों से ईश्वर जीव का विवेचन आरम्भ किया है।

आत्मा क्या वस्तु है? आनन्दमय आत्मा में शोक क्यों होता है? जीव ब्रह्म रूप कैसे हो जाता है? इन बातों का वैज्ञानिक विवेचन कर गीता का मुख्य प्रतिपाद्य बुद्धि योग है, यह प्रतिज्ञा की गई है, और बुद्धि का स्वरूप प्रदर्शन करते हुए बुद्धियोग का स्वरूप प्रदर्शन किया गया है। सात्विकबुद्धि के चार रूप हैं-धर्म, ज्ञान, वैराग्य और ऐश्वर्य उनका अव्यय पुरुष में योग प्रकार बताने के चार ही विद्या प्रधानतया गीता में कही गई है।

| | |
|---|---|
| १—राजर्षि विद्या | वैराग्य योग ( कर्म योग ) |
| २—सिद्ध विद्या | ज्ञान योग |
| ३—राज विद्या | ऐश्वर्य योग ( भक्ति योग ) |
| ४—आर्ष विद्या | धर्म योग ( केवल कर्म प्रधान ) |

इन से प्राप्त होने वाली परा और अपरा मुक्ति का भी विवेचन हुआ है और प्रसंङ्गागत योग का भी संक्षिप्त निरूपण है।

केवल विद्या और केवल कर्म परस्पर विषम होने से मुक्ति प्रापक नही होते इस लिये दोनों का सामञ्जस्य गीता शास्त्र का विषय है यह प्रतिज्ञा कर सा मञ्जस्य गीता में किस प्रकार किया गया है इसका विस्तृत निरूपण है।

आगे गीता का लक्ष्य पूर्वाचार्यों ने क्या क्या माना है? इसका संक्षिप्त निरूपण कर स्व सिद्धान्त बुद्धि योग का उपपादन किया है। फिर जावा वाली में जो ७० श्लोक की गीता मिली है उसका पाठ प्रदर्शन और उसपर आलोचना की गई है। अनन्तर भगवद् गीता का विषय निरूपण करते हुए गीता प्रतिपाद्य दर्शनों की चर्चा उठाई गई है उसमें वैशेषिक सांख्य और वेदान्त का विषय विभाग बड़ी रोचक प्रक्रिया से लिखा है।

कई प्रकार से तीनों दर्शनों की एक वाक्यता दिखाई गई है और अव्यय पुरुष का साक्षात्प्रतिदान करने के कारण गीता सर्वो त्कृष्ट है यह सिद्ध किया गया है। यहां ब्राह्मण और उपनिषदों के प्रतिपाद्य का भी भेद बताते हुए परमरहस्य का निरूपण किया है।

आजकल षड्दर्शनवाद जिस रूप में प्रसिद्धहै, उस रूढिका खंडन किया है फिर ईश्वर प्रजापति और जीव प्रजापति को दो प्रकार के प्रजापति बताकर जीवप्रजापति

के मूलधातु आत्मा प्राण चित्त और पाप्मा ( धूमा ) का विस्तृत निरूपण किया है इसीमें अवान्तर अग्नि-सोम-शरीर त्रय भूत आदि का परम रहस्यमय वैज्ञानिक विवेचन आता है और आत्मा के अट्ठारह भेदों का मनोरञ्जक निरूपण भी आता है।

आगे ब्रह्म और कर्म का विवेचन है। फिर गीता में कर्म, भक्ति, ज्ञान तीनों का निरूपण रहते भी 'लोकेऽस्मिन द्विविधानिष्ठा' भगवान् ने क्यों कहा, इस पर प्रकाश डालते हुए तीनों में बुद्धियोग के साहाय्य की आवश्यकता दिखाई है। प्राचीन आचार्यों के मतानुसार कर्मयोग भक्तियोग और ज्ञानयोग का विशद विवेचन भी है। कर्मयोग में वर्णधर्म और आश्रमधर्म का अद्भुत रहस्य समझाया गया है। यज्ञ, तप, दत्त, इष्ट, आपूर्त और दत्त इन षट् कर्मों का भी रहस्यमय विवेचन है। सभी लोग बात चीत में ष(ख)ट्करम कहा करते हैं किन्तु वह ष (ख) ट् करम क्या है—यह यहीं समझ में आवेगा। प्रवृत्त और निवृत्त कर्म को भी संक्षिप्त किन्तु रहस्य पूर्ण व्याख्या है। भक्तियोग में उपासना के अनेक विभाग बताते हुए मूर्ति पूजा का रहस्य भी निरूपित हुआ है फिर स्वानुभिमत बुद्धियोग का रहस्य समझाया गया है। बुद्धि के चार भेदों के अनुसार ही भगवद्गीता में ४ विभाग हैं यह स्पष्ट किया गया है। यहां धर्म का लक्षण भी एक अपूर्व निरूपित हुआ है। अधर्म से क्यों पतन होता है? धर्म विरुद्ध नीति मार्ग क्यों निन्द्य है? इस पर अद्भुत प्रकाश इस प्रकरण में पड़ता है। आगे भगवद्गीता में ४ विद्या २४ उपनिषद् और १६० उपदेश हैं उनका विभाग बताकर प्रथम काण्ड समाप्त किया गया है।

म. म. पं. गिरिधर शर्मा चतुर्वेदी।



॥ श्रीः ॥

# रहस्यकाण्डम्

गीताविज्ञानभाष्यस्य प्रथमे रहस्यकाण्डे त्रीणि रहस्यानि—
नामरहस्यम्, शास्त्ररहस्यम्, विषयरहस्यं चेति

विषयाः पृष्ठ-संख्या



इति गीताविज्ञानभाष्ये रहस्यत्रयनिरूपणं
प्रथमं काण्डम

---

॥ श्रीः ॥

# अथ गीताया रहस्यकाण्डे नामरहस्यम्

अगाधगीताविज्ञानाम्भोधिपारगमक्षमम् ।
गोविन्दस्मरणं पोतमिवालम्बे मनोरमम् ॥१॥
योगीश्वरेण कृष्णेन लोकशोकहृतेः कृते ।
उपदिष्टाऽर्जुने शिष्ये या गीता सा निरूप्यते ॥२॥
यत्र चतस्रो विद्या उपनिषदो विंशतिश्चतस्रश्च ।
उपदेशाः षष्टिशतं सेयं गीतानुगीयतामनिशम् ॥३॥

## श्रीभगवद्गीतोपनिषदो विज्ञानभाष्यमिदमारभ्यते

अस्ति खलु महापुरुषेण भगवता श्रीकृष्णेनेह प्रवर्तितं सर्वशास्त्रातिगतं किञ्चिदपूर्वं विज्ञानं गीताशास्त्रं नाम । तस्य ब्रह्मकर्म्मोभयविद्यानिरूपकत्वादात्मशास्त्रत्वं चोपपद्यते, योगशास्त्रत्वं च । तदिदं नाम्ना—"भगवद्गीतोपनिषद्" इत्याख्यायते । तस्यैतस्य नाम्नो रहस्यमावेदयितुमिदं तावत् प्रकरणमुपक्रम्यते ।

### १—तत्रादौ भगवच्छब्दसमीक्षा

अव्ययपुरुषस्वरूपावरणहेतोर्योगमायाया निराकरणादनावरणस्यात्मनोऽव्ययस्य स्वरूपशक्तीनामैश्वर्य्यादीनां षण्णां भगानां मेघावरणापाये सूर्य्यकिरणानामिव स्वयमेव यत्राविर्भावः, स भगवानित्युच्यते। एष खल्वव्ययः पुरुषो बहुविधशक्तिविशिष्टः श्रूयते—

**"न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥** (श्वेताश्व० ६।८)

तासां चैतासां स्वरूपधर्म्मरूपाणां परशक्तीनां मध्ये षड्विधाः शक्तिविशेषा भगशब्देनाख्यायन्ते—

**"ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥**

रागद्वेषौ, संमोहः, अस्मिता, अभिनिवेशश्चेत्यविद्याबुद्धयो भवन्ति। अथ वैराग्यम्, ज्ञानम्, ऐश्वर्य्यम्, धर्म्मश्चेति चतस्रो विद्याबुद्धयो भवन्तीति सांख्यशास्त्रे स्मर्य्यते। तत्रैतासां चतुर्विधानां विद्याबुद्धीनामव्ययस्य विद्याकर्म्मभ्यां द्वैधातव्यस्य विद्याभागे योगो बुद्धियोग इत्युच्यते। तस्माच्च बुद्धियोगादस्मिन् जीवात्मन्यव्यये स्वतः सिद्धस्य विद्याभागस्य कर्म्मजनितैरविद्याबुद्धिरूपैः पाप्मभिः प्रत्युत्पन्नमावरणं निवर्तते। वैराग्येण रागद्वेषयोः, ज्ञानेन संमोहरूपस्याज्ञानस्य; ऐश्वर्य्येणास्मितायाः, धर्म्मेण चाभिनिवेशस्य—इत्येवं प्रयुक्ताभिः प्रबलाभिर्विद्याबुद्धिभिर्ज्योतिर्लक्षणाभिस्तमोलक्षणानामविद्याबुद्धीनां पाप्मनां निराकरणात् तत्कृतात्मविद्यावरणस्यात्यन्तं निरस्तत्वात्। तथा चैतदव्ययात्मनस्ते नित्यसिद्धा भगनामानः स्वरूपधर्म्मा अनावृताः सन्तो विज्ञानात्मना गृहीताः स्वयमेव साक्षात्क्रियन्ते। आतश्च

कृतात्मसाक्षात्कारः पुरुषो भगवानित्युच्यते। आत्यन्तिकप्रकाशरूपं चेदं ज्ञानज्योतिरात्मनो विद्याभागो विज्ञातः प्रादुर्भवति। एतदात्मज्योतिर्वशादेव च पञ्चानां भौतिकज्योतिषां[१] ज्योतिष्ट्वमुपपद्यते, तस्मादिदं ज्योतिषां ज्योतिः। तथा च श्रूयते—

**१—"न तत्र सूर्य्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥इति॥ (मुण्डको० २।२।१०)**

पञ्चानामेषां भूतज्योतिषां मुख्ये त्वस्मिन् सूर्य्यज्योतिष्याविर्भूयेदमात्मज्योतिः सूर्य्यरश्मिद्वारैवास्मिन् भूतात्मनि संनिधत्ते। तथा च श्रूयते—

**२—"हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्।**
**तच्छुभ्रं ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्॥इति॥ (मुण्डको० २।२।९)**

**३—यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाऽभिस्वरन्ति।**
**इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमन्वाविवेश॥ ऋ० मं० १। सू० १६४।२१**

**४—यस्मिन् वृक्षे मध्वदः सुपर्णा निविशन्ते सुवते चाधिविश्वे।**
**तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नो नशद्यः पितरं न वेद॥ ऋ० १। १६४। २२**

अमृतमर्त्यविभाजकादस्मात् सूर्य्यादूर्ध्वं सर्वममृतमधस्तान् मर्त्यमिति ब्राह्मणानुगमः। तत्र सूर्य्ये सुपर्णा रश्मयोऽमृतस्यात्मनो भागं ज्ञानज्योतिर्विदथा-विज्ञानरूपेणाभिप्रतपन्ति—सूर्य्यज्योतिषि संनिवेशयन्ति। अथैष इनः-सूर्य्यः, पुनरस्यैव सुपर्णस्य द्वारा, मर्त्यस्य चैतस्याधस्तात् संनिविष्टस्य भुवनस्य गां रश्मिं पिबति च, पाति च। तथा चैष सूर्य्यस्ताभ्यामुभाभ्यामूर्ध्वाधराभ्याममृतमर्त्यरसाभ्यामभिसंपन्नः प्रतपति। विज्ञानज्योतिषा संपन्नः सूर्य्यः पुनरत्र पृथ्वीलोके धीरो बुद्धिप्रवर्तकः पाकमल्पं मां मनुष्यमन्वाविवेश। चिदात्मज्योतिः सूर्य्ये संनिविश्य भूतज्योतिर्भवति, भूतज्योतिः पुनर्मनुष्यशरीरे प्रविश्य बुद्धिरूपज्ञानज्योतिर्भवतीति तात्पर्य्यम्॥१॥

अथ यस्मिन् जीवात्मरूपे वृक्षे पर्य्यायेण विश्वविषयानन्दभोक्तारः, आत्मानन्दभोक्तारश्चैते बुद्धिरश्मयः स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्त्येन्द्रियसहिता आत्मन्येव निविशन्ते-लीयन्ते, पुनः प्रबोधकाले, अधिविश्वे विश्वस्योपरि सुवते-स्वस्वेन्द्रियविषयान् ग्रहीतुं प्रवर्तन्ते। तस्यैव भूतज्योतिर्मूलभूतचिदात्मज्योतिरभिसंनिविष्टबुद्धेः-अग्रे उत्तरतः शुभफलभोगो भवति। यस्तु पितरं-बुद्धिविज्ञानजनकं चिदात्मानं न वेद स तन्नो नशत्—न तत्फलं प्राप्नोति। अन्यत्राप्याहुः—

**"पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ पश्यति नान्तरात्मन्।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥ इति॥ (कठोप० २।४।१)**

आत्मनि बुद्धियोगान्मृत्युभ्यो विमुक्तः परमानन्दी भवतीति भावः॥

तथा चेदं सिद्धं भवति—पृथ्वीरूपस्य विश्वस्योपरिष्टात् तमेतममृतं रश्मयः सुवते-प्रवर्तयन्ति। तेनैष मर्त्यामृतोभयविधविज्ञानसंपन्नः सूर्य्यः, अत्र पृथ्वीलोके मां बुद्धिरूपेणाविवेश। स मे विज्ञानात्मा नामोच्यते। एतदेवाभिप्रेत्य श्रुतिराह—**"सूर्य्य आत्मा जगतस्तस्थुषश्चेति"**॥ अस्यैव सूर्य्यादुपपन्नस्यामृतमर्त्योभयविधरससंपन्नस्य विज्ञानात्मनोऽष्टौ बुद्धयः स्वरूपाणि भवन्ति। यावदमृतं तास्तावद् विद्याबुद्धयश्चतस्रः—वैराग्यं ज्ञानमैश्वर्यं धर्म्मश्चेति। राज्यविभूतिवस्त्रालङ्कारादौ लौकिकोन्नतिसामग्र्यां तुच्छत्वबुद्धिर्वैराग्यम्॥ १॥ ज्ञानं चेह परोक्षातीन्द्रियार्थद्रष्टृत्वलक्षणं भाव्यम्। यथाह—

---

[१] अग्निः—विद्युत्—सूर्य्यः—चन्द्रः—नक्षत्राणि—इति पञ्च भूतज्योतींषि॥
पृथ्वी—अन्तरिक्षम्—द्यौः—आपः—दिशः—इति भूतज्योतिषां लोकाः॥
१ २ ३ ४ ५

**"आविर्भूतप्रकाशानामनभिप्लुतचेतसाम् ।**
**अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥१॥**
**अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ॥**
**ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥२॥ इति ॥२॥**

अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वमित्येता अष्टै योगसिद्धय एवैश्वर्याणि ॥३॥

**"यो धृतः सन् धारयते स धर्म्म इति कथ्यते ।**
**धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः ॥ इति धर्मः ॥४॥**

एषु खलु विद्याविशेषेषु भगशब्दो निरूढः। अथ यावन् मर्त्यम्, ताः पुनरविद्याबुद्धयश्चतस्रः—रागद्वेषौ, संमोहः, अस्मिता, अभिनिवेशश्चेति। एतासु चाविद्याबुद्धिषु योगमाया[1]शब्दो निरूढः। योगमाया च भगश्चेत्येतौ भावौ परस्परप्रतिद्वन्द्विनौ भवतः। तेनैतदविद्याबुद्धिभिर्बहुशाखाभिर्विद्याबुद्धेर्व्यवसायात्मिकायाः प्रत्यवरोधादव्ययस्यामृतात्मनः स विद्याभागः परशक्तिसंपन्नोऽपि नाभिप्रकाशते—इत्यतः सर्वेऽप्येते साधारणमनुष्या बहुधा व्यामोहमापद्यमानाश्चार्ताः परिलक्ष्यन्ते। अथैतद्भगसंज्ञकविद्याबुद्धियोगात्तु ता अविद्याबुद्धयो निवर्तन्ते। आतश्चैष विद्याबुद्धिप्रकाशवशात् कृतात्मसाक्षात्कारः पुरुषो भगवानित्युच्यते। तस्यैतस्य भगवतोऽनन्ता आत्मशक्तयो ज्योतीरूपाः प्रकाशन्ते। तदेतत्प्रकाशविशेषादस्य भगवतोऽतीतानि चानागतानि च सर्वाणि जन्मानि प्रत्यक्षीभवन्ति, तेनैष जातिस्मरतामायाति। अपि च स्मर्य्यते—

**"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।**
**वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥इति॥**

अस्ति चैष वासुदेवः श्रीकृष्णश्चतुर्विधबुद्धियोगप्रथमोपदेशकत्वेन जगद्गुरुतया भगवान्। यद्यपि च वेदव्यासादयोऽन्येऽपि सन्ति कतिपये भगवन्तस्तथाप्यच्युतभगवत्त्वमस्मिन्नेव श्रीकृष्णे भगवन्तो वेदव्यासादयः परिपश्यन्ति नान्येषु। ननु—अव्ययात्मनिष्ठत्वमेवाच्युतत्वमित्यन्येषामपि महर्षीणां भगवतामच्युतत्वं नाप्राप्तमिति चेन्न। भगसंबन्धिन्यूनाधिकमात्रावतां तेषां भगवत्त्वसिद्धावपि यत्र पूर्णमात्रया भगवत्त्वं तस्यैवाच्युतभगवत्त्वप्रतिपत्त्या श्रीकृष्णातिरिक्तानामच्युतत्वासिद्धेः। अस्ति हि वैराग्येण वा, ज्ञानेन वा, ऐश्वर्य्येण वा, धर्म्मेण वा—केनचिदेकेनापि भगेनोपायेन यथाकथंचिदावरणनिराकरणादेषां परमाप्तानां विदुषां कृतात्मसाक्षात्कारत्वाद् भगवत्त्वोपपत्तिः। किन्तु ऐश्वर्य्यादिभिः सर्वविधैरेव नित्यसिद्धैः सर्वथा सर्वविधाविद्यानिराकरणात् प्रस्फुटाव्ययात्मनोऽस्य कृष्णवासुदेवस्यैव पूर्णाव्ययावतारत्वलक्षणमच्युतत्वं सर्वसंप्रतिपन्नमिष्यते। अच्युतभगवत्त्वं हि महापुरुषलक्षणम्। तच्च प्रतिबुद्धेश्वरभावत्वादितरसर्वजीवविलक्षणात्मत्वम्। तथा हि—विद्यारूढकर्म्मोद्ग्राभनिग्राभक्रमाभ्यामेष खलु जीव उत्तरत्र जीवनिरुक्तिप्रकरणे वैशद्येन सप्तसंस्थो वक्ष्यते। तत्र तावदग्नित्रयतारतम्यात् स त्रिसंस्थो भवति—

| | |
|---|---|
| (१) १—**वैश्वानराग्निसंस्थ**स्तावदयमसंज्ञः खनिजः। | १ कर्म्ममयः ९ |
| (२) २—**तैजसवायुसंस्थः** पुनरन्तःसंज्ञ उद्भिज्जः। | २ कर्म्ममयः ८ |
| (३) ३—**प्राज्ञात्मरूपेन्द्रसंस्थ**स्त्वेष ससंज्ञो जीवज इति॥ | ३ कर्म्ममयः ७ |

---

**[1] महामायान्तर्गतेयं योगमाया। सा चाग्रे—**

**'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' इत्युपदेशविवरणावसरे उपदेशकाण्डे व्याख्याता द्रष्टव्या।**

अथैष ससंज्ञः पुनस्त्रिसंस्थो भवति—

(३) १—**कर्म्मात्मसंस्थः ।**　　४ कर्म्ममयः ६

(४) २—**चिदाभाससंस्थः ।**　　विद्यामयः ५ कर्म्ममयः ५

(५) ३—**ईश्वरसंस्थः**—इति ।।　　विद्यामयः ४　४

अथैष ईश्वरसंस्थः पुनस्त्रिसंस्थो भवति—

(५) १—**ऊर्क्संस्थः**　　विद्यामयः ३　३

(६) २—**श्रीसंस्थः**　　विद्यामयः २　२

(७) ३—**विभूतिसंस्थश्चेति ।**　　विद्यामयः १　१

तत्रैते पञ्चमविधषष्ठविधसप्तमविधाः प्रतिबुद्धेश्वरांशा द्रष्टव्याः। तथा चेदं प्रतिबुद्धेश्वरांशत्वमलौकिकविभूतिमत्त्वात् सर्वातिशायिश्रीमत्त्वादूर्जितत्वाच्चोपपद्यते। उक्तं च भगवद्गीतायाम्—

**"यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा ।**

**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ।। इति ।।**

नानात्माभिव्याप्तात्मवत्त्वं विभूतिमत्त्वम् । तच्च सत्यावता[1] रत्वेन सर्वलोकसाक्षित्वादस्य कृष्णस्योपपद्यते। अथैश्वर्य्यादिषड्विधभगवत्त्वं श्रीमत्त्वम् । तच्च स्वात्माव्ययपुरुषोपदेशकत्वेनेश्वरभावदर्शनात् सुस्फुटमस्योपपद्यते। अथेतरासाधारणबलवदात्मत्वमूर्जितत्वम् । वाङ्मयः प्राणमयो मनोमयश्चायमात्मा । अस्ति चाव्ययात्मोपदेशकत्वाद् बुद्धियोगमतप्रवर्तकत्वाच्चास्य कृष्णस्य जगद्गुरुत्वेन परमोर्जितात्मत्वम् । तेनैतस्य परमेष्ठिरूपीश्वराभिन्नत्वादुपास्यत्वं भाव्यम् । तथा चायं श्रीकृष्णः सत्यमूर्तिरव्ययो महापुरुषः सर्वलोकसाक्षी जगद्गुरुरच्युतो भगवान्—इतिसिद्धम् । स चैतच्चतुर्विधबुद्धियोगप्रभवः कृतपूर्णाव्ययसाक्षात्कारो भगवान् कृष्णो योगेश्वरः समाख्यायते। तेन च सर्वविद्याप्रत्यक्षदर्शिना योगीश्वरेण भगवता कृष्णेनेयमव्ययविद्याचतुष्टयी गीयमानाऽभूत्, तथा चैतस्या गीतायाः पूर्णद्रष्ट्रोपदिष्टत्वादविलिष्ट[2]याथातथ्योपेतत्वं परमश्रद्धेयत्वं चोपपद्यते। विद्यायां चोपनिषच्छब्दः प्रयुज्यते। तस्याश्च भगवता गीयमानत्वादियं भगवद्गीतोपनिषदित्याख्यायते ।।

इति भगवच्छब्दसमीक्षा ।।

---

[1] **सर्वमिदमाचार्यकाण्डे विस्तरेणोपपादितमिति तत्रैवालोच्यम् ।**

[2] **अविलिष्टम्—अखण्डितांशम् । वेदप्रासेद्धः शब्दोऽयम्**

# अथ गीताशब्दसमीक्षा

अत्रेदमाशङ्क्यते— अस्तु श्रीकृष्णस्य भगवत्त्वम्। तथापि तेनैवेयमव्ययब्रह्मसंबन्धिनी बुद्धियोगविद्या प्रथमोपदिष्टा—इति नोपपद्यते। अव्ययपुरुषविज्ञानलक्षणाया आत्मविद्यायाः श्रौतोपनिषत्सु भूयसा प्रथमोपदिष्टत्वात्। तथाहि—

**"वि यस्तस्तम्भ षडिमा रजांसि अजस्य रूपे किमपि स्विदेकम्"। ऋ० १।१६४।**

**"न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।**

**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥०॥"** (श्वेताश्वतरोपनिषत् ६।८)

**"दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।**

**अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः॥०॥** (मुण्डकोपनिषत् २।१।२)

**"परात्परं पुरुषमुपैति दिव्यम्"।** (मुण्डकोपनिषत्। ३।२।८)

**"परेऽव्यये सर्व एकीभवन्ति"।** (मुण्डकोपनिषत्। ३।२।७)

इत्येवमादिषु श्रौतोपनिषद्वाक्येष्वप्रत्यक्षं प्रत्यक्षं वा भूयसाऽव्ययपुरुषस्य पराजादिशब्दैः प्रागेवोपदेशः श्रूयते। तथा च नेयं तावदव्ययब्रह्मविद्या श्रीकृष्णोपज्ञमेवेति शक्यं वक्तुम्। प्रथमोपदिष्टे चार्थे गीताशब्द इष्यते। तस्मान्नेयमात्मविद्या भगवता गीतेति संभवति—इति चेदत्र ब्रूमः। अस्तु तावदक्षरालम्बनरूपाया अव्ययात्मविद्यायाः श्रौतोपनिषत्सूपदेशः, तथाप्यस्या बुद्धियोगरूपाया अव्ययात्मविद्यायाः श्रीकृष्णोपज्ञत्वं नापोद्यते। बुद्धियोगनिष्ठापुरस्कारेण साध्याया अव्ययविद्यायाः श्रुत्युपनिषत्सु विशिष्यानुपदिष्टत्वात्। दृश्यते हि—अव्ययपुरुषविज्ञानलक्षणाया ब्रह्मविद्यायास्तत्प्राप्त्युपायभूतायाश्च बुद्धियोगनिष्ठालक्षणायाः कर्म्मचर्यायाः श्रीकृष्णोपज्ञोपदेशप्रभावेणैव लोके भूयानयं प्रचारः प्रथमः। श्रौतोपनिषत्सु सत्यपि क्वचिदव्ययात्मोपदेशे तात्पर्य्यग्राहकवचनविशेषानुपलब्ध्या तदव्ययब्रह्मविद्यायास्तत्प्राप्त्युपायभूतैतद्-बुद्धियोगरूपायाः कर्म्मनिष्ठायाश्च सुनिगूढप्रच्छन्नत्वात्।

अत एव च भगवताऽच्युतेनैव प्रथमं दृष्टत्वादव्ययब्रह्मविषयं बुद्धियोगकर्म्मविषयं चेदं श्रीकृष्ण-वाक्यं श्रुतिरिवोपपद्यते। द्रष्टुर्वाक्यं श्रुतिः, श्रोतुर्वाक्यं स्मृतिरिति सिद्धान्तात्। निरपेक्षो रवः श्रुतिः स्वतः प्रमाणमित्याहुः। द्रष्टुर्वाक्यत्वाच्चेयं गीता श्रुतिः सती सत्यतायां प्रमाणान्तरनिरपेक्षत्वात् स्वतः प्रमाणं भवति। न तु इतरस्मृतिवत् परतः प्रामाण्यमपेक्षते।

तथा चैतं जीवाव्ययम्, जगदात्मानं चेश्वराव्ययं साक्षात्कुर्वता भगवताऽच्युतेन दृष्ट्वा प्रथमो-पदिष्टा हीयमशेषकर्म्मवासनानिरासौपयिकाऽव्ययपुरुषविज्ञानलक्षणा ब्रह्मविद्या, तथा हृदयग्रन्थिबन्ध-प्रतिबन्धकबुद्धियोगचर्य्यालक्षणा कर्म्मज्ञानोभयनिष्ठा संग्रहरूपा बुद्धियोगनिष्ठा च भगवद्गीतेत्युच्यते। एष हि भगवद्गीतोपनिषच्छास्त्रार्थनिष्कर्षः।

अथवा तुष्यतु-दुर्जनन्यायेनेदमपरं ब्रूमः। द्विविधा हीयमुपनिषद् भवति-श्रौती, स्मार्ती च। तत्र भेदकरणविवक्षया स्मार्तोपनिषदि गीताशब्दः प्रयुज्यते। पूर्वं केनाप्युपदिष्टस्यार्थस्य पुनरुपदेशो गानम्। स्वल्पकायस्य सतो वाग्विन्यासस्य विताने "गायति" शब्दस्य विवक्षितत्वात्। श्रौतोपनिषत्सु संक्षिप्योक्ताया अव्ययविद्याया वैशद्येन स्पष्टप्रतिपत्तये भगवता गीतत्वादियमुपनिषद् वा ब्रह्मविद्या वा, बुद्धियोगनिष्ठा वा भवत्येव गीताशब्दव्यपदेश्या। तथा हि स्मर्य्यते––

**समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।**

**अर्जुने विमनस्के च गीता भगवता स्वयम्।** इति महाभारते १२।३।८।

स इत्थं यौगिकत्वात् क्रियाशब्दत्वाच्चायं विशेषणभूतोऽपि गीताशब्दः पश्चात् क्रमेण स्मार्तोपनिषदि रूढः संपन्नः। भगवद्गीतोपनिषदित्यादिशब्दव्यवहारे गीताशब्दस्य विशेषणत्वेऽपि "गीताशास्त्रम्" इत्यादिव्यवहारे स्वातन्त्र्येण तत्प्रयोगदर्शनात्।।

इति गीताशब्दसमीक्षा।।

---

# गीता-नामरहस्ये उपनिषच्छब्दसमीक्षा

ननु उक्तं तावत्-श्रौतीस्मार्तीभेदादुपनिषद् द्वेधा भवति—इति। तत्र ब्रूमः—न स्मार्ती काचिदुपनिषत् संभवति। मन्त्रब्राह्मणारण्यकोपनिषद्भिर्भागैर्विभक्तस्येश्वरप्रवर्तितस्य वेदशास्त्रस्य योऽन्तो भागस्तत्रैवोपनिषच्छब्दस्य सुप्रतिपन्नत्वात्। अत एवोपनिषत्सु वेदान्तशब्दोऽपि प्रवर्तते। वेदान्तत्वेन व्यवहृतायाश्चैतस्या उपनिषदः स्मार्तत्वं नोपपद्यते इति चेत्, सत्यम्। एवमपीश्वरावतारेण भगवता विशिष्टपुरुषेणोपदिष्टायामस्यामात्मविद्यायां श्रौतात्मविद्यासाधर्म्यं प्रतिपादयितुमिवायमविशेषेणोपनिषच्छब्दः प्रवर्तते।

यत्तु कर्म्मयोगशास्त्रमिदम्, नत्वात्मविद्याशास्त्रमिति केचिदद्यतना ऊहन्ते, तत्तेषामनधिकारचर्चामात्रमवैज्ञानिकमाख्यानं भवति। कर्म्मोपासनात्मज्ञानविवेचनापार्थक्येन प्रवर्तमानेषु त्रिषु वेदभागेषु ब्राह्मणारण्यकोपनिषच्छब्दानां पार्थक्येन प्रवर्तमानतया कर्म्मयोगशास्त्रे उपनिषच्छब्दस्य प्रयोगानौचित्यात्। गीताप्रकरणान्ते तु सर्वत्र **"भगवद्गीतासूपनिषत्सु योगशास्त्रे"**—इत्येवमुपनिषच्छब्दः प्रयुज्यते। तस्मादस्या ज्ञानयोगशास्त्रत्वमेवोपपद्यते। यत्तु **"योगशास्त्रे"**—इति सामान्येनोपसंहारात् कर्म्मयोगशास्त्रत्वमस्य संभाव्यते—इत्याहुस्तन्न। बुद्धियोग-ज्ञानयोगतात्पर्य्येणापि योगशास्त्रताया उपपन्नत्वात्। कर्म्मयोगे तूपनिषच्छब्दस्य सनातनविशिष्टव्यवहारविरुद्धतयाऽनौचित्यात्। ननु गीतायां ज्ञानयोगनिन्दा स्मर्य्यते—

**"न च संन्यसनादेव सिद्धिं समधिगच्छति।"**

**"नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः"** ॥इति॥

तस्मान्नेदं ज्ञानयोगशास्त्रमितिचेत्—सत्यम्। ज्ञातव्यकर्तव्यभागाभ्यां द्वेधा विभक्ते वेदशास्त्रे मननीयतया मन्त्राख्यस्य ज्ञातव्यभागस्येतिहासस्तुतिविज्ञानैर्यथा त्रैविध्यं दृश्यते, तथैव कर्तव्यभागस्य ब्राह्मणारण्यकोपनिषद्भिर्विभक्ततया तदनुसारात् त्रयो योगा इष्यन्ते—कर्म्मयोगो बुद्धियोगो ज्ञानयोगश्चेति। तत्र प्रथमो यज्ञसाध्यविजयादेशः। द्वितीय ईश्वरप्रपत्त्यादेशः। तृतीयो ब्रह्मकैवल्यादेश इति। एतावन्तस्त्रय एवैते पुरुषार्था भवन्ति। अत एवैतास्त्रिविधा एव निष्ठा लोकेषु दृश्यन्ते। तत्र लौकिकफलविशेषकामनया नित्यनैमित्तिककाम्यरूपसर्वविधकर्म्मकलापप्रवृत्तिलक्षणा तावदियं गृहमेधिप्रायाणां साधारणलोकानामर्थे कर्म्मयोगनिष्ठा प्रवर्तते। ॥१॥ एवमेवैतादृशसर्वविधकर्म्मकलापैकान्तनिवृत्तिलक्षणा कर्म्मसंन्यासाख्या सांख्यानामात्मज्ञानयोगनिष्ठा भवति॥२॥ अथोपासनाबुद्धियोगस्ताभ्यामतिरिच्यते। स च कर्म्मयोगज्ञानयोगयोरन्तरालवर्ती प्रवृत्तिनिवृत्तिभ्यामुभाभ्यामेव व्यवस्थया युज्यते। तथहि—नित्यनैमित्तिकानां सर्वविधकर्म्मणां निष्कामतया कर्तव्यताऽस्मिन् बुद्धियोगे प्रवृत्तिनिष्ठा। तेनायं बुद्धियोगः कर्म्मयोगेऽन्तर्भाव्यते। अथ काम्यकर्म्मफलसंन्यासश्चास्मिन् बुद्धियोगे निवृत्तिनिष्ठा। तेनायं ज्ञानयोगे समाविशति। तथा च कर्म्मयोगज्ञानयोगोभयसाधर्म्यवैधर्म्यवत्यस्मिन् बुद्धियोगे नित्यादिकर्म्मप्रवृत्तिसत्त्वेऽपि वासनोदयौपयिकापेक्षाबुद्धिराहित्येन कर्म्मजन्य-वासनानुदयान्नैष्कर्म्यलक्षणं ज्ञान-

योगसाधर्म्यमुपपद्यते। तेनायं बुद्धियोगो ज्ञानयोगान्नातिरिच्यते। अत एव खलु भगवानैतरेयो भगवान् याज्ञवल्क्यश्चारण्यकमुपनिषदं च सांकर्य्येणोपदिदिशतुः। व्यपदिशन्ति च वैदिका वाजसनेयोपनिषदं वृहदारण्यकशब्देन। तस्माद्—

**"दूरेण ह्यवरं कर्म्म बुद्धियोगाद् धनञ्जय।**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः"॥**
**"बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते"॥**
**"तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम्"॥**
**"तपस्विभ्योऽधिको योगी ज्ञानिभ्यश्च मतोऽधिकः।**
**कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन"॥**

इत्यादिना कामासक्तिकृतैहिकामुष्मिकफलवत्कर्म्मयोगापेक्षया, सर्वकर्म्मात्यन्तपरित्यागलक्षणज्ञानयोगापेक्षया चैतस्मिन् बुद्धियोगे प्राशस्त्यमुपदिशतोऽस्य भगवद्गीताशास्त्रस्यापि शक्यते ज्ञानयोगशास्त्रत्वमेवाभ्युपगन्तुम्। ज्ञानयोगशास्त्रत्वाच्चैतस्या भगवद्गीताया उपनिषच्छब्देन व्यपदेशो न विरुध्यते। अत एव च—

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।**
**ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम्"॥**

इति भगवदुक्तं निष्ठाया द्वैविध्यं न विरुध्यते। बुद्धियोगनिष्ठाया अतिरिक्तत्वे तु निष्ठात्रैविध्यापत्तौ द्वैविध्याख्यानं विरुद्धं स्यात्। तथा चैतस्या भगवद्गीताया बुद्धियोगनिष्ठात्मकज्ञानयोगनिष्ठारूपाया उपनिषत्त्वे सुप्रतिपन्ने तस्याः श्रुतावनाम्नातत्वात् स्मार्तत्वमेवाभ्युपगन्तुं युक्तम्॥३॥

इत्थं च गीताया उपनिषत्त्वोपपादनं परेषां मतेनोक्तम्। वयं तु ब्रूमः। नैतदात्मविद्यात्वमेतस्योपनिषच्छब्दस्य पदार्थतावच्छेदकं भवति। अपि तु तत्तत्कर्म्मकलापेतिकर्तव्यताप्रकारविशेषोपपादकत्वेन व्यवस्थिते विज्ञानसिद्धान्तेऽयमुपनिषच्छब्दो निरूढः। उपपत्तिनिरूपणद्वारा यया विज्ञानसिद्धान्तप्रतिपत्त्या करिष्यमाणकर्म्मणि कर्तव्यत्वेन श्रद्धानं निश्चितरूपेण सीदति-प्रतितिष्ठति, सा प्रतिपत्तिस्तत्कर्म्मण उपनिषद् भवति। तयोपनिषदा तत्कर्म्मणः कर्तव्यता साधूपपाद्यते। यथा मनुष्यशरीरस्थे अध्यात्मयज्ञे गार्हपत्यस्य पार्थिवाग्नेरायतनं शरीरस्य पश्चाद्भागे नाभेरधस्ताद् वस्तिप्रदेशे मूलाधारे दृश्यते। श्रपणीयस्य तु दक्षिणाग्नेरायतनं मध्यशरीरवेद्या दक्षिणभागे जठरे पित्ताशये वा ऽवतिष्ठते। अथाहवनीयस्य पुनर्दिव्याग्नेरायतनं शरीरस्य पूर्वभागे शिरसि दृश्यते—इत्येतयैवोपनिषदा मानुषात्मनो मध्यशरीरयष्टिसाम्येनोपकल्पिताया हविर्यज्ञवेद्याः पश्चाद्भागे पार्थिवाग्निस्थानीयगार्हपत्यायतनं क्रियते, वेद्या दक्षिणप्रान्ते दक्षिणाग्न्यायतनं क्रियते, वेद्याः पूर्वभागे तु दिव्याग्निरूपाहवनीयायतनं क्रियते। एवं यजमानशीर्षारब्धायाः सूर्य्यमण्डलसदेशावसितरथन्तरसामावसानाया भूमिच्छायामयभूमेर्महावेदीत्वं भवति। तत्र च आध्यात्मिकवेद्याहवनीयरूपोऽयं यजमानशिरोऽग्निः पृथिवीलोकस्थो नूतनगार्हपत्याग्निः प्रदृश्यते, दिव्याग्निस्तु भूमिच्छायामण्डलावसानस्थोऽसावेकविंशस्तोमप्रदेशः संभवति—इति कृत्वैतयैवोपनिषदा दैवात्मनो मध्यशरीरयष्टिसाम्येनोपकल्पितायाः सोमयज्ञीयमहावेद्याः पश्चाद्भागे हविर्यज्ञसंबन्धिनः शालाद्वार्यस्याहवनीयस्यैव गार्हपत्यत्वं नियम्यते। सूर्य्यबिम्बरूपयूपसदेशावसितमहावेद्याः पूर्वावसाने उत्तरवेदिनाभौ त्वाहवनीयो व्यवतिष्ठते। अन्तरिक्षत्वेनोपपन्ने सदोमण्डपसधस्थे धिष्ण्याग्न्यायतनं प्रकल्प्यते।

तदित्थं सर्वविधयज्ञेतिकर्तव्यताप्रकारविशेषोपपादकतया गृहीतं प्रकृतिसिद्धानां भावानां विज्ञानमेव तत्तत्कर्म्मेतिकर्तव्यतायामुपनिषद् भवति। कर्म्मणि कर्तव्ये प्रवृत्तिहेतुः कृतसिद्धान्तो नियमविशेष उपनिषद्—इति यावत्॥ अत एव—

**"आरण्यमियान्न पुनरेयादित्युपनिषदिति वैखानसेभ्यो नियमो विधीयते"**
(शारीः ३।४।३८ भाष्ये)

**"यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवति"**
इति छान्दोग्यश्रुतिवचने च लोकवेदसाधारण्येन सर्वकर्म्माभिप्रायेणोपनिषच्छब्दः प्रयुज्यते। म्लेच्छ-भाषायाम्—"उसूल" शब्देन; पाश्चात्यभाषायाम् "प्रिंसिपिल" (Principle) शब्देन वा योऽर्थो विवक्ष्यते, तत्रैव संस्कृतभाषायामयमुपनिषच्छब्दः प्रयुज्यते—इति सिद्धान्तः।

सा चेयमुपनिषत्त्रिविधा—आरभ्याधीतानां क्रत्वर्थकर्म्मणामितिकर्तव्यतोपपादिका सान्या ॥१॥ अनारभ्याधीतानां पुरुषार्थकर्म्मणामन्या ॥२॥ सर्वसाधारणकर्म्मणां चान्या ॥३॥ तत्र प्रथमविधानां बहुत्वाद् ब्राह्मणभागे एवाचमन-प्रणयन-प्रोक्षणादितत्तत्कर्म्मणां विधानान्तेऽमीषां तास्ताः सर्वा उपनिषदस्तत्र तत्रैवानुपदं प्रदर्श्यन्ते। तद् यथा—

**"व्रतमुपैष्यन्—अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नप उपस्पृशति। कस्माद्वा अप उपस्पृशति। अमेध्यो वै पुरुषो, यदनृतं वदति, तेन पूतिरन्तरतः। मेध्या वा आपः। मेध्यो भूत्वा व्रतमुपायानीति। पवित्रं वा आपः। पवित्रपूतो व्रतमुपायानीति। तस्माद्वा अप उपस्पृशति।" (शत० १।१।१) इत्यादि॥**

एवंविधानामुपनिषदां कर्म्मप्रकरणान्तर्भुक्तत्वान्न पार्थक्येनोपनिषच्छब्देन व्यवहारावसरो लभ्यते। द्वितीयविधानान्तु कासांचिच्चातुर्मास्ययागादिरूपाणां कर्म्मणां ब्राह्मणभागे उपदेशः। तद् यथा—

**महाहविषा ह वै देवा वृत्रं जघ्नुः। ते नोऽएव व्यजयन्त येयमेषां विजितिस्ताम्। अथ यानेवैषां तस्मिन्त्संग्रामेऽघ्नन्, तान् पितृयज्ञेन समैरयन्त। पितरो वैतऽ आसन्। तस्मात् पितृयज्ञो नाम। तद्वसन्तो ग्रीष्मो वर्षाः, एते ते ये व्यजयन्त। शरद्धेमन्तः शिशिरः—त उ ते यान् पुनः समैरयन्त। अथ यदेष एतेन यजते। तन्नाह न्वेवैतस्य तथा कंचन घ्नन्तीति। देवा अकुर्वन्निति न्वेवैष एतत् करोति। यमु चैवैभ्यो देवा भागमकल्पयंस्तमु चैवैभ्य एष एतद् भागं करोति। यानु चैव देवाः समैरयन्त तान् चैवैतदवति। स्वानु चैवैतत्पितॄञ्छ्रेयांसं लोकमुपोन्नयति यदु चैवास्यात्रात्मनोऽचरणेन हन्यते वा मीयते वा—तदु चैवास्यैतेन पुनराप्यायते। तस्माद्वा ऽएष एतेन यजते"—॥ (शत०। २ काण्डे, ५ प्रपाठके, २ ब्राह्मणे) इति।**

अथ कासांचिद्वा तत्र तत्रोपनिषद्भागे निरूपणम्। यथा छान्दोग्योपनिषदि ब्रह्मकर्तृकं यज्ञविरिष्टसंधानम्। यथा वा कौषीतकोपनिषद्येकधनावरोधनं दैवस्मरो वा॥ अथ सर्वयज्ञसाधारण्येन त्वात्मविद्यैवोपनिषद् भवतीत्यवगमसौकार्य्यार्थं सर्वकर्म्मप्रकरणान्तेऽवसरप्राप्तामात्मविद्यां पठति। तदिदमात्मविद्याप्रकरणं कर्म्मासांकर्य्येण पृथग् दृष्टत्वाद् उपनिषच्छब्देन साधु व्यवह्रियते। नैतावताऽऽत्मविद्यायामेवायमुपनिषच्छब्दो न वा वेदान्तेष्वेवायं शब्दो नियम्यते। तस्माद् भगवता गीतेयं बुद्धियोगनिष्ठालक्षणा कर्म्मविद्यासमुच्चिताऽव्ययब्रह्मविद्या प्रवर्तयितव्यनिष्कामकर्म्मेतिकर्तव्यतोपपादकतया भवत्यञ्जसोपनिषच्छब्दव्यपदेश्या। अत एव च वैदिक्यो वा लौकिक्यो वा संभवन्त्येवंविधा अन्या अपि बह्व्य एवोपनिषद इति प्रतिपत्तव्यम्। तथा च सिद्धम्—इयं भगवद्गीता अव्ययपुरुषलक्षणब्रह्मविद्या बुद्धियोगनिष्ठालक्षणकर्म्मविद्या चोभयी स्वलक्षणेनैवोपनिषदस्तीति।

भगवद्गीताऽधीता उपनिषदो विंशतिश्चतस्रश्च॥ (२४)
अपि बुद्धियोगविद्याचतुष्टयी तत्र निर्दिष्टा॥१॥

इत्युपनिषच्छब्दसमीक्षा।

इति त्रिविधसमीक्षोपेतं गीतानामरहस्यमाख्यातम्।

---

॥ श्रीः ॥

# शास्त्ररहस्यम्

## २—अथ गीताया रहस्यकाण्डे शास्त्ररहस्यम्

### तत्रादौ विज्ञानभाष्यविवक्षा।

तत्रादौ **गीतास्वरूपसंबन्धे साधारणजनतायां प्रचलिता प्राचीनदृष्टिः।**

१—गीतां तावत् प्रपश्यन्ति श्लोकैः सप्तशतीं[१००] जनाः। [१८]अष्टादशभिरध्यायैर्विभक्तामैतिहासिकीम् ॥१॥
तत्र चाध्यायषट्केषु त्रिषु श्लोकाः स्थिताः क्रमात्। अशीत्या[२८०] नवभिश्चै[२०९]कादशभिर्द्विशती[२११] सह ॥२॥
प्रथमेऽध्यायषट्के तु **ज्ञानयोगो**ऽवधीयते। तत्राध्यायेषु षड् योगा [१]विषादः [२]साङ्ख्य-[३]कर्म्मणी ॥३॥
[४]ज्ञानभागाश्च संन्यासो[५]ऽभ्यासयोगात्म[६]संयमौ। द्वितीयेऽध्यायषट्के तु **भक्तियोगो**ऽनुदिश्यते ॥४॥
तत्र च ज्ञान[१] विज्ञानमक्षर[२]ब्रह्म च स्थितम्। [३]राजगुह्यं [४]विभूतिश्च [५]विश्वरूपं च [६]भक्तयः ॥५॥
तृतीयेऽध्यायषट्के तु **कर्म्मयोगो** विधीयते। [१]क्षेत्रज्ञक्षेत्रसंभागस्त्रै[२]गुण्यं [३]पुरुषोत्तमः ॥६॥
संपद् [४]दैव्यासुरी [५]श्रद्धा [६]संन्यास इति चान्ततः। इत्थं क्रमेण गीतायां योगा अष्टादशोदिताः ॥७॥
ज्ञानयोगो भक्तियोगः कर्म्मयोग इति त्रयम्। षडध्यायीविभेदेन विभक्तमिति चक्षते ॥८॥

### साधारणलोकदृष्ट्यनुसारेण गीताविषयविभागः

#### (१) ज्ञानयोगे (२८०) श्लो०

| अध्यायाः | श्लोकाः | योगाः |
|---|---|---|
| १ | ४७ | विषादयोगः |
| २ | ७२ | सांख्ययोगः |
| ३ | ४३ | कर्म्मयोगः |
| ४ | ४२ | ज्ञानकर्म्मसंन्यासयोगः |
| ५ | २९ | कर्म्मसंन्यासयोगः |
| ६ | ४७ | आत्मसंयमयोगः |
| | **(२) भक्तियोगे (२०९) श्लो०** | |
| ७ | ३० | ज्ञानविज्ञानयोगः |
| ८ | २८ | अक्षरब्रह्मयोगः |
| ९ | ३४ | राजगुह्ययोगः |
| १० | ४२ | विभूतियोगः |
| ११ | ५५ | विश्वरूपदर्शनयोगः |
| १२ | २० | भक्तियोगः |

## (३) कर्म्मयोगे (२११) श्लो०

| | | |
|---|---|---|
| १३ | ३४ | प्रकृतिपुरुषविभागयोगः |
| १४ | २७ | गुणत्रयविभागयोगः |
| १५ | २० | पुरुषोत्तमयोगः |
| १६ | २४ | देवासुरसंपत्तियोगः |
| १७ | २८ | श्रद्धात्रययोगः |
| १८ | ७८ | संन्यासयोगः |
| | ७०० | |

## ३—गीताया वैज्ञानिकशास्त्रत्वप्रतिज्ञा

३—ब्रूमो वयं तु येऽध्यायविभागा अत्र दर्शिताः। ते महाभारतग्रन्थानुरोधादैतिहासिकाः ॥१॥
अस्ति वैज्ञानिकं शास्त्रं गीतेयं ब्रह्मकर्म्मणोः। विशिष्येहात्मविद्यायां बुद्धियोगो विधीयते ॥२॥
यस्तु वैज्ञानिकानत्र विभागान् ज्ञातुमिच्छति। वैज्ञानिकक्रमस्तस्मै भिन्नवत् परिदर्श्यते ॥३॥
*सन्ति चतस्रो विद्या उपनिषदो विंशतिश्चतस्रश्च। उपदेशाः षष्टिशतं यस्यां सैषानुगीयतां गीता ॥४॥

## ४—साधारणजनतायां गीताया वैज्ञानिकशास्त्रत्वेन स्पष्टप्रतिपत्त्यभावे हेतुः

४—या एता इह विद्या उपदिष्टाः सन्ति ताः सर्वाः। इतिहासक्रमहेतोर्व्याख्यादोषाच्च नाऽऽभान्ति ॥१॥
भगवद्गीतोपनिषद् भारतयुद्धप्रसङ्ग उपदिष्टा। तत इतिहासग्रन्थाध्यायक्रमतोऽद्य सा प्रथते ॥२॥
अत एव चैतिहासिकरूपकषायानुरक्तायाम्। गीतायामुपदिष्टं विज्ञानं साधु नाऽऽभाति ॥३॥
अपि येन न प्रवेशः साधु कृतो ब्रह्मविज्ञाने। तस्य न गीताहृदयं विद्याविषयं विभासेत ॥४॥
बहवो गीताव्याख्या भवन्ति ताः श्लोकशब्दार्थम्। दर्शयितुं प्रयतन्ते न तु विद्या दर्शयन्त्येताः ॥५॥
गीताहृदयं वैदिकमतिदूरं क्षेपितं लोकैः। पुनरुद्धरिष्यतीदं गीताविज्ञानभाष्यं तत् ॥६॥

## ५—गीतायां वैज्ञानिकशास्त्रत्वदृष्ट्या ऐतिहासिकग्रन्थत्वापह्नवः

५—†इतिहासग्रन्थोक्ताप्येषा गीता न भक्तिरेतस्य। विज्ञानशास्त्रमेतत् कृष्णो व्याचष्ट शिष्याय ॥१॥
कृष्णो मानुषरूपोऽव्ययश्च तत्राव्ययः कृष्णः।
गीतायां बहुधोक्तोऽहंशब्देन क्वचिन्मनुजः ॥२॥
मानुषरूपः कृष्णोऽव्ययकृष्णस्य स्वरूपमाख्यातुम्।
विद्याश्चतुर्विधा उप-दिदेश सैषोच्यते गीता ॥३॥

---

***विद्याः ४। उपनिषदः २४। उपदेशाः १६०।**

**†युद्धप्रसङ्गे गीतोपदेशः प्रावर्तत। स च प्रसङ्गो यद्यप्यैतिहासिकमेव स्थानं भवति, तथापि—"शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्"—इत्येवं तत्र विद्यागुरुशिष्यभावेन भिन्नप्रस्थानेन प्रवर्तमानतया तत्रैतिहासिकप्रक्रमानादरेण विद्योपदेशप्रक्रमानुरोधो न्याय्यः। अत एवात्र शुद्धविज्ञानशास्त्रस्वरूप-प्रदर्शनानुरोधेन भारतेतिहासक्रमसिद्धाध्यायविभागा उपेक्षिता इति विवेक्तव्यम्। तथाचेदमेकमेव गीताशास्त्रं दृष्टिभेदेन द्वेधा द्रष्टव्यम्—ऐतिहासिकग्रन्थरूपेण वैज्ञानिकशास्त्ररूपेण चेति। तत्रैतिहा-सिकत्वे महाभारतग्रन्थाङ्गत्वादपेक्ष्यन्तेऽमी अध्यायविभागाः। वैज्ञानिकशास्त्रत्वे त्वेतेऽध्यायविभागा नापेक्ष्यन्ते। प्रक्रमभेदेन तत्र विद्यानामुपदिष्टत्वात्।**

विद्याप्रभाववशतो यावन् माहात्म्यमस्ति गीतायाः।
एकान्ततस्तदस्तं तत् प्रोद्धर्तुं प्रयासोऽयम् ।।४।।
अत्र च नाऽर्थोऽध्यायानुदर्शनेनेतिहासेन ।
विद्योपदेशि शास्त्रस्वरूपमात्रं त्विहादेयम् ।।५।।
दृष्टचा यया तु पश्यन् दर्शयिता दर्शयेत् कमप्यर्थम् ।
तामास्थाय हि दृष्टिं साधु तमर्थं परः पश्येत् ।।६।।
विद्यामुवाच भगवान् दृष्टिं वैज्ञानिकीं पुरस्कृत्य ।
तां विद्यामितिहासक्रमतः पश्यन् कथं पश्येत् ।।७।।
तस्माद् वेदनिगूढं विज्ञानं भगवता यदाश्चर्य्यम् ।
आविर्भावितमतुलं तदिहान्वादर्शयिष्यामि ।।८।।
बाह्याडम्बरमात्रासक्ता इतिहासभक्ता ये ।
ते चेतिहासमात्रे बुद्धिं कुर्वन्तु तुष्यन्तु ।।९।।

## ६—श्रीकृष्णं प्रति दृष्टिद्वैविध्यात् तदुपासकजनताद्वैविध्यम्

द्विविधानि जीवलोके जीवानां सन्ति कर्म्माणि ।
स्वेच्छाकृतानि जीवैरथ परमात्मप्रयुक्तानि ।।१।।
इच्छन् मनसा कुरुते यानि तु कर्म्माणि जीवोऽयम् ।
साधारणानि सर्वैर्मानुषचरितानि तानि स्युः ।।२।।
नेच्छाकृतानि यानि तु लोकोत्तरविविधकर्माणि ।
अत्यद्भुतान्यकस्मात् तानि परात्मानुबन्धीनि ।।३।।
अथ यः कश्च मनुष्यो लोकोत्तरविविधकर्म्माणि ।
अत्यद्भुतान्यकस्मादिच्छन्नेवेह लीलया कुरुते ।।४।।
परमात्मैव स कथमप्यधिकारेणोद्भवन् भूमौ ।
मानुषरूपं कृत्वा लीलाचरितानि दर्शयति ।।५।।
द्विविधा उपासकाः स्युर्मनुष्यचरितान्युपासते केचित् ।।
ते साम्प्रदायिका इह तेषामितिहासमूलिका दृष्टिः ।।६।।
वैज्ञानिकाः परे तु प्रतिपुरुषं साधु पश्यन्ति ।
जीवात्मनि परमात्माभेदोपहितानि कर्म्माणि ।।७।।
ते वेदशास्त्रसिद्धानीश्वरकर्म्माण्युपासते कृष्णे ।
विज्ञानमूलिका त्विह सत्यात्मनि दृष्टिरस्त्येषाम् ।।८।।
तत्सांप्रदायिकानामुपासकानां विशिष्य मोदाय ।
भाष्यमिदं गीतायां वैज्ञानिकदृष्टिमातनुते ।।९।।

## ७—श्रीकृष्णं प्रति दृष्टिद्वैविध्ये हेतुः

*कृष्णो योगेश्वरः सोऽग्रमाधिकारिक इष्यते ।
मनुष्यत्वं चेश्वरत्वं द्वयं तत्र विभाव्यते ।।१।।
चरितानि ततस्तस्य द्विविधान्यभवन् स्वतः ।
लोकोत्तराणीश्वरत्वान्मनुष्यत्वान्मनुष्यवत् ।।२।।

---

*** एतत्सर्वमाचार्यकाण्डे विस्तरेण विवेचितमिति तत्रैव निरीक्ष्यम् ।**

भावा युद्धप्रसङ्गाद्या मनुष्यत्वोपकल्पिताः ।
ईश्वरत्वप्रभावात्तु विश्वरूपं प्रदर्शितम् ॥३॥
उपासकास्ततस्तस्य भवन्ति द्विविधा इह
मानुषं चरितं तस्य केचनोपासते जनाः ॥४॥
मानुषेऽप्यस्य चरिते हेतुं वैज्ञानिकं विदुः ।
असुरोन्मथनं देवत्राणं धर्म्मोपदेशनम् ॥५॥
अलौकिकानि पश्यन्ति भूयांसि चरितान्यपि ।
अपि पश्यन्ति विज्ञानात् कृष्णभावस्य नित्यताम् ॥६॥
इत्थमीश्वरकृष्णस्य गुह्यं चरितमात्मनः ।
व्यामर्शयन्तो मुच्यन्ते जन्मसंसारबन्धनात् ॥७॥

### ८—श्रीकृष्णस्येश्वरत्वप्रतिपत्तौ गीतावैज्ञानिकभाष्यस्योपयोगिता

त एव त्वीश्वरं कृष्णं पश्यन्ति परमार्थतः ।
विज्ञानतो ये पश्यन्ति गीतोपनिषदं पराम् ॥८॥
नाभाति गीताहृदयं विना विज्ञानभाष्यतः ।
पश्यन्तु गीताशास्त्रस्य भाष्यं वैज्ञानिकं ततः ॥९॥

### गीताविषयोद्देशः

पदार्था* अत्र गीतायां चतुर्धा[४] दशधा[१०] द्विधा[२] ।
अपि षोडशधा[१६] ख्याताश्चतुर्विंशतिधापि[२४] च ॥१०॥
विभाजिता निरूप्यन्ते सषष्टिशत[१६०]संख्यया ।
तेऽमी स्पष्टीभविष्यन्ति गीताविज्ञानभाष्यतः ॥११॥

**इति गीताशास्त्ररहस्ये विज्ञानभाष्य-विवक्षा नाम प्रथमः प्रकाशः ॥१॥**

---

*१ **द्विधा—२**
**ब्रह्मविज्ञानम्, कर्म्मविज्ञानम्-चेति ।**

२ **चतुर्धा—४**
**वैराग्यविद्या, ज्ञानविद्या, ऐश्वर्य्यविद्या, धर्म्मविद्या चेति ।**

३ **दशधा—१०**
**आत्मा[१], आत्मधातू[२], चातुर्विद्यम्[३], शोकनिवारणम्[४], ईश्वरत्वम्[५], शोककारणम्[६], त्रिवीर्य्यम्[७], बुद्धियोगः[८], धातुसाम्यम्[९], प्रतिष्ठा[१०] ।**

४ **षोडशधा—१६**
**विद्याचतुष्टयी[४], बुद्धियोगचतुष्टयी[८], साम्यवादचतुष्टयी[१२], आत्मदर्शनचतुष्टयी[१६] ।**

५ **चतुर्विंशतिधा—२४**
**उपनिषदः—उपक्रमे एका, राजर्षिविद्यायामष्टौ, सिद्धविद्यायां द्वे, राजविद्यायां तिस्रः, आर्ष-विद्यायां सप्त, उपसंहारे तिस्रः ।**

६ **षष्टिशतधा—१६०**
**उपदेशाः—उपक्रमे द्वौ[२], राजर्षिविद्यायां पञ्चाशत्[५०], सिद्धविद्यायामूनविंशतिः[१९], राजविद्यायां द्वात्रिंशत्[३२], आर्षविद्यायामूनपञ्चाशत्[४९], उपसंहारेऽष्टौ[८] ॥**

२

# अथ गीतातात्पर्य्यनिरुक्तिर्द्वितीयः प्रकाशः

## तत्रादौ शिक्षादशतयी

(१) इयं हि भगवद्गीता किं किं शिक्षयतीह नः ।
इति जिज्ञासमानेभ्यो गीतातात्पर्य्यमुच्यते ॥१॥
**आत्मयोगमथात्मानमात्मधातुद्वयं** पृथक् ।
**धातुसाम्यं बुद्धियोगं चातुर्विद्यं त्रिवीर्य्यकम्** ॥२॥
**शोकस्य कारणं** यच्च यच्च **शोकनिवारणम्** ।
यथा च**ेश्वरसाधर्म्या**ज्जीवोऽयं भगवान् भवेत् ॥३॥
इमान् दशविधानर्थान् गीता शिक्षयतीह नः ।
एतान् सम्यग् विजानान आत्मदर्शी सुखी भवेत् ॥४॥
गीतातोऽर्थानिमान् बोद्धुं शक्नुवन्ति न येऽञ्जसा ।
तेषामर्थे पृथक्कृत्य तानिमान् बोधयाम्यहम् ॥५॥
पृथक् तावद् विजानानः सम्यगेतान् परिस्फुटम्
विज्ञानभाष्यतो गीतातात्पर्य्यं लब्धुमर्हति ॥६॥

(२) १ तत्र गीताया बुद्धियोगशास्त्रत्वाद् बुद्धियोगस्य च ज्ञानयोगकर्म्मयोगोभयसमुच्चितरूपत्वादस्या गीताया **आत्मज्ञानशास्त्रत्वं योग**शास्त्रत्वं च ।

२ तत्र क्षराक्षराव्ययभेदात् त्रिधातुः पुरुष **आत्मा** ।

३ मनोमयविज्ञानगर्भितानन्दो विद्या । तज्ज्ञानम् ।
मनोमयप्राणगर्भिता वाग् वीर्य्यम् । तत् कर्म्म ।
विद्या च वीर्य्यं चेति द्वौ **आत्मनो धातू** ।

४ विद्यासमुच्चितवीर्य्यप्रयोगे ज्ञानकर्म्मणोः समत्वोपपत्तिर्**धातुसाम्यम्** ।

५ अव्ययात्मभक्तिभूतायां विद्यायां विज्ञानात्मभक्तिभूतायाश्चतुर्विधविद्याबुद्धेः संप्रयोगो **बुद्धियोगः** ।

६ अव्ययम्, विद्या, बुद्धेयोगः, समत्वमिति **चातुर्विद्यम्** ।

७ ब्रह्म क्षत्रं विडिति **त्रिवीर्य्यम्** ।

८ विद्यापचारः—कर्म्मापचारः—इति द्वयं शोककारणम् ।

९ आत्मविद्या—निष्कामकर्म्म—इति द्वयं शोकनिवारणम् ।

१० बुद्धियोगचतुष्टयनिबन्धना जीवानामात्मविद्योदयाद् भगवत्त्वसिद्धिः । **तदीश्वरसाधर्म्यम्** ॥

## १—आत्म-योगः

(३) जीवप्रकृतिसिद्धाविद्याबुद्धियोगजन्यसर्वविधानुशोकविनाशोपायप्रदर्शनात्मकं हीदं भगवद्-गीताशास्त्रम्। तत्र ब्रह्मकर्मणोरात्मकलयोः समत्वेनोपपन्नयोः सहयोगेन प्रवृत्तिवशाद् विद्या-बुद्धियोगचतुष्टयनिबन्धनात्मसाक्षात्कार एवायमेकः सर्वविधशोकव्युत्थानोपायोऽस्तीति कृत्वा आत्मसाक्षात्कारोपायभूतबुद्धियोगविद्याचतुष्टयप्रचारकत्वादिदं गीताविज्ञानं योगशास्त्रं चोपपद्यते, आत्मशास्त्रं च। अपि च अव्ययपुरुषोऽयमात्मा ब्रह्म। विद्याबुद्धियोगचतुष्टयं कर्म्म। विद्याबुद्धियोग-वशादविद्याबुद्धियोगनिवृत्तौ सत्यामव्ययात्मावरकयोगमाया परिहृता भवतीति कृत्वा मेघावरणापाये सूर्य्यवत् स्वयमात्मा प्रकाशते, सोऽयमात्मसाक्षात्कारः परमः पुरुषार्थः। तद्विज्ञानोपदेशो भगवद्गीता शास्त्रार्थः ॥

## २—आत्मा

(४) तत्र तावद् योऽयमात्मा सोऽन्वेष्टव्यो विशेषतः।
न त्वेव स्पष्टमात्मानमेतं जानाति कश्चन ॥७॥
**"न विजानामि यदि वेदमस्मि निण्यः संनद्धो मनसा चरामि।**
**यदा माऽगन् प्रथमजा ऋतस्य आदिद् वाचो अश्नुवे भागमस्याः"** ॥१।१६४।३७॥
इति श्रुतेर्यद्यपि वस्तुगत्या नाहं स्वमात्मानमवैमि सम्यक्।
तथापि यद् यावदिवावगन्तुं शक्नोमि तद्दर्शयतीह गीता ॥८॥
अचिन्त्य एषोस्ति हि निर्विशेषस्तत्राव्ययं मामगमत् त्रिवेदी।
यजुष्युपागादथ वाङ्मयोऽग्निः स इत्थमात्मा प्रणवोऽयमस्ति ॥९॥
भुङ्क्ते दुःखमनात्मज्ञो मृत्युभिः स वृतो यतः।
तस्मादात्मावगन्तव्यो दुःखात्यन्तनिवृत्तये ॥१०॥
आत्मस्वरूपविज्ञाने सन्ति विप्रतिपत्तयः।
याथार्थ्येन स्वमात्मानं हन्त जानन्ति न क्वचित् ॥११॥
**[1]शरीरमिन्द्रियग्रामं मनो बुद्धिं महच्च वा।**
**आत्मानमभिमन्यन्ते [2]भूतं प्राणं च चेतनाम् ॥१२॥**
वस्तुगत्यैतमात्मानमजानन्नज्ञतावशात्।
अन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ॥१३॥
अनात्मरक्षणव्यग्रो हन्तात्मानमुपेक्षते।
प्रज्ञापराधतः सर्वः शोकग्रस्त इहेक्ष्यते ॥१४॥
तस्मादात्माऽवगन्तव्य आत्मार्थे सर्वमिष्यते।
तमात्मानमियं गीता स्पष्टं दर्शयतीव मे ॥१५॥

---

**[1] शरीरं भूतग्रामः चित्याग्निः ॥१॥ इन्द्रियग्रामः प्राणमयश्चितेनिधेयाग्निः ॥२॥ मनश्चन्द्रजम् ॥३॥ बुद्धिः सूर्य्यजा ॥४॥ महान् परमेष्ठी ॥५॥ [2]भूतमर्थः। प्राणः क्रिया। चेतना ज्ञानम्। एतत् त्रयमात्मरूपम् ॥६॥**

## ईश्वरप्रजापतेरात्मव्यूहः

| स्तराः | अश्वत्थधातवः | ब्रह्मविवर्ताः | आत्मानः | आत्मनः पर्वविशेषाः | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | अमृतम् | परात्परः | निगूढोत्मा | सर्वशक्तिघनोऽनन्तरबाह्यो भूमा | | | | |
| २ | अमृतम् | पुरुषः | परमात्मा | अव्ययः, अक्षरः, क्षरः। | | | | |
| ३ | ब्रह्म | प्रकृतिः | अधियज्ञात्मा | १ स्वयम्भूः ब्रह्माग्निः | २ परमेष्ठी ...... | ३ सूर्य्यः देवाग्निः | ४ चन्द्रः ...... | ५ पृथ्वी भूताग्निः |
| ४ | शुक्रम् | वैकारिकः | सर्वभूतान्तरात्मा | ब्रह्मा १ | | विष्णुः २ | | महादेवः ३ |

## जीव-प्रजापतेरात्मव्यूहः

| आत्म-काराः | आत्मवर्गः | आत्मविवर्ताः | | आत्मभावाः | |
|---|---|---|---|---|---|
| १ | अमृतम् | परात्परः<br>अव्ययः<br>अक्षरः<br>क्षरः | १<br>२<br>३<br>४ | अभयात्मा<br>आलम्बनात्मा<br>नियन्तात्मा<br>परिणाम्यात्मा | पुरुषात्मा |
| २ | ब्रह्म | प्राणः<br>आपः<br>वाक्<br>अन्नम्<br>अन्नादः | ५<br>६<br>७<br>८<br>९ | शान्तात्मा<br>महानात्मा<br>विज्ञानात्मा<br>प्रज्ञानात्मा<br>प्राणात्मा | अव्यक्तम्<br>महान्<br>बुद्धिः<br>मनः<br>इन्द्रियाणि |
| ३ | शुक्रम् | इन्द्रः<br>वायुः<br>अग्निरमृतः | १०<br>११<br>१२ | प्राज्ञात्मा<br>तैजसात्मा<br>वैश्वानरात्मा | अन्तरात्मा |
| | | अग्निर्मर्त्यः | १३ | शरीरात्मा | बाह्यात्मा |

२

अथवा जीवेष्वष्टादशात्मानो द्रष्टव्या:। चत्वारोऽमृतवर्गीयाः। पञ्च ब्रह्मवर्गीयाः। अथ नवान्ये शुक्रवर्गीयाः। तथा हि—

(१) पार्थिवोऽग्निः—शरीरात्मा।

(२) पार्थिवो वायुः—हंसात्मा।

(३) पार्थिव इन्द्रः—दिव्यात्मा चेति।। स एष त्रिविधो दिव्यात्मा—

(३) अग्निः—वैश्वानरः। तेनात्मन्विनोऽसंज्ञा जीवाः।

(४) वायुः—तैजसः। ताभ्यामात्मन्विनोऽन्तःसंज्ञा जीवाः।

(५) इन्द्रः—प्राज्ञः। एतैरात्मन्विनः ससंज्ञा जीवाः।

स एष प्राज्ञस्त्रिविधः—

(५) कर्म्मात्मा वासनामय ईश्वरजनितः।*

(६) चिदाभासो ज्योतिर्म्मय ईश्वरांशः।

(७) ईश्वरः परदेवता ईश्वरानतिरिक्तइति।

स एष ईश्वरो जीवशरीरानुगतस्त्रेधा संप्लवते—

(७) ऊर्ग्लक्षणः

(८) श्रीलक्षणः

(९) विभूतिलक्षणश्चेति।

स एतावानयमात्मा सर्वं इति विद्यात्।।

---

*कर्मपुरुषस्यैतस्य षोडशकलस्य षोडश गुणाः सुश्रुतशारीरके (१।२१) प्रदर्शिताः।।

[१]सुखम्। [२]दुःखम्। [३]इच्छा। [४]द्वेषः। [५]प्राणः। [६]अपानः। [७]उन्मेषनिमेषौ। [८]प्रयत्नः। [९]बुद्धिः। [१०]मनः। [११]संकल्पः। [१२]विचारणा। [१३]स्मृतिः। [१४]विज्ञानम्। [१५]अध्यवसायः। [१६]विषयोपलब्धिः इति।।

उन्मेषनिमेषौ नेत्रादेः प्रसारसंकोचौ। मनः इन्द्रियप्रेरणाशक्तिः। संकल्पः कल्पनाशक्तिः। विचारणा विवेचना। विषयोपलब्धिः शब्दादिविषयग्रहः।। वैशेषिके तु दर्शनेऽष्टौ गुणा व्याख्यायन्ते— बुद्धिः सुखं दुःखम् इच्छा द्वेषः प्रयत्नः धर्म्मः अधर्म्म इति। संस्कारोऽप्यन्यो गुणो द्रष्टव्यः।।

## आत्मस्वरूपज्ञापक-वेदवचनानि

तत्र तावच्छ्रुतिः कञ्चित्पुरुषं प्रकृतेः परम् ।
अजमात्मानमादेष्टुमित्थमन्वाह निश्चितम् ॥

१ अचिकित्वांश्चिकितुषश्चिदत्र कवीन् पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तम्भ षडिमा रजांसि अजस्य रूपे किमपि स्विदेकम् ॥
ऋक् सं० १मं । २२ अ० । १६४ सू० । ६ मं०

२ यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् संदेह्ये गहने प्रविष्टः ।
स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥
बृहदारण्यकोपनिषत् ४ अ० । ४ ब्रा० । १३ क०

३ इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः ।
य एतद् विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥ बृ० आ० उ० ४।४।१४

४ आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत् ॥ बृ० आ० उ० ४।४।१२

५ यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ बृ० आ० उ० ४।४।१५

### ( १ ) अश्वत्थहृदयबिन्दुस्थोऽनिरुक्तः सप्तलोकव्यापी आत्मा

६ एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ।
विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ बृ० आ० उ० ४।४।२०

७ यस्मात् परं नापरमस्ति किञ्चिद् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ श्वेता० उ० ३।९

८ ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद् विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥ श्वेता० उ० ३ अ० १० मं०

९ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ बृ० आ० उ० ४।४।२१

### ( २ ) स्वयंभूरश्वत्थवल्शामूलभूतः

१० यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ बृ० आ० उ० ४।४।१७

११ अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ।
शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अन्तः ॥ नारायणोपनिषत् १ मं०

१२ यस्मिन्निदं सं च वि चैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुः ।
तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् ॥ नारायणोपनिषत् १ मं०

१३ येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ॥ नारायणोपनिषत् १ मं०

१४ न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ नारायणोपनिषत् ३ मं०

### ( ३ ) परमेष्ठी वायुसमुद्रात्मा

१५ महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।
सुनिर्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥ (श्वेताश्व० ३।१२)

## ( ४ ) हिरण्यगर्भः सूर्य्यः

१६ यस्मादर्वाक् संवत्सरो अहोभिः परिवर्त्तते ।
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।। बृ० आ० उ० ४।४।१६

१७ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ।। यजुः सं० १७ अ० १९ मं०

१८ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ।। श्वेताश्वतरोपनिषत् ६ अ०। १८ मं०

## ( ५ ) ईश्वर-जीवात्मानौ साक्षि-भोक्तारौ

१९ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।। मुण्डकोपनिषत् ३।१।१

## ( ६ ) विद्यानिरपेक्ष-विद्यासापेक्षे कर्म्मणी आत्मगतिहेतू

२० इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वा इमं लोकं हीनतरं चाविशन्ति ।। मुण्डकोपनिषत् १।२।१०

२१ तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्ष्यचर्य्यां चरन्तः ।
सूर्य्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा ।। (मुण्डको० १।२।११)

## एषां मन्त्राणां संक्षिप्तं तात्पर्य्यम्

१ षण्णां रजसां विधर्ता परोरजाः कश्चिदश्वत्थानां मध्यविन्दुलक्षितोऽयमजो नामाव्ययः ।।

२ जीवात्मशरीरस्थः षण्णामात्मनां विधारको विरजा बुद्धियोगात् प्रतिबुद्धो जीवाव्ययः ।।

३ निरस्तसर्वकर्म्मणो विदेहमुक्तस्य, सद्योमुक्तस्य विशुद्धाव्ययतया नित्यानन्दरूपत्वम् ।।

४ शरीरधारिणः शारीरकस्यात्मनः शरीरातिरिक्तत्वमनामयत्वम् ।।

५ ऋषिदेवादिप्राणपरिग्रहपरित्यागाभ्यां पुनः पुनर्जन्ममृत्युवशाद् भूतभव्यत्वशालित्वम् ।।

६ पञ्चजन-पञ्चप्रकृतिक-स्वयंभ्वात्मक-परमाकाशातीत-परात्परस्य विश्वानतिरिक्तत्वेनैकत्वम् ।।

७ सप्तलोकशरीरिणं विश्वव्यापिनमीश्वरमुपासीना ईश्वरमेवानुगता विश्वव्यापिनो भवन्ति ।।

८ सर्वभूतान्तरात्मनोऽप्युत्तरो ब्रह्मसत्यात्मा, यद्गर्भेऽयं देवसत्यात्मा, स परमात्मा ।।

९ भूतात्म, प्राणात्म, प्रज्ञानात्म, विज्ञानात्म, सत्त्वात्म, पुरुषात्म, गूढोत्मादिभिरभेदेन एक एवात्मानुभाव्यः ।।

१० ब्रह्मसंज्ञक-पञ्चजनप्रकृतिमय-पुरुषस्यात्मत्वम् ।।

११–१४ यथा मर्त्यत्रैलोक्यव्यापी सर्वभूतान्तरात्मा साक्षी प्रजापतिः, तथा स्वयंभू-परमेष्ठि-सूर्य्यैः कृतरूपोऽमृतप्रजापतिः ।।

१५ अत्यन्तनिर्मलां महत्संज्ञां प्राप्तिं य ईष्टे, स एव ज्योतिर्मयोऽव्ययपुरुषः सत्त्वप्रवर्तकः ।।

१६ संवत्सराग्निप्रभावादिन्द्रप्राणरूपायुर्ग्राहित्वात् सूर्य्ययोनिक-वैज्ञानिकात्मशालित्वम् ।।

१७ त्रिलोकव्यापी सर्वभूतान्तरात्मा देवसत्यात्मा सर्वजीवसंभवः कश्चिदेक ईश्वरो जीवेषु ।।

१८ वेदगर्भं स्वयंभुवं ब्रह्माणं यो जनयति, स प्रकृतिमयः पुरुषोऽमृतात्मा मुक्त्यै द्रष्टव्यः ।।

१९ विद्यानिरपेक्षपुण्यकर्म्मणा संस्कृतात्मानो देवयानेन पथा स्वर्गिणः पुनरावर्तन्ते ।।

२० विद्यासापेक्षपुण्यकर्म्मणा संस्कृतात्मानो देवयानेन पथा स्वर्गिणो न पुनरावर्तन्ते ।।

२१ प्रतिशरीरं द्वावात्मानौ भवतः, जीवात्मान्यः, ईश्वरात्मान्यः । एको भोक्ता, अन्यः साक्षी ।।

---

**वेदवचनतात्पर्य्यार्थापरिज्ञानाद् व्यामोहे वेदव्याख्यानावश्यकत्वम् ।।**

इत्येवमात्माव्यय एष केवलो निष्कर्षसिद्धः श्रुतिभिर्निरूपितः ।
तथापि तत्रैष यथावदग्रहात् सर्वस्य नाभाति विशेषतोऽव्ययः ।।१।।
**'नाहं प्रकाशः सर्वस्य योगमायासमावृतः।'**
इत्येवमव्ययस्यास्य भगवानग्रहं जगौ ।।२।।
अपश्यतामार्षदृशा विपश्चितां वेदार्थतात्पर्य्यमजानतां सताम् ।
स्वबुद्धिक्लृप्तानि मतानि भिन्नवद् भवन्ति सत्यं तु न तेषु विद्यते ।।३।।
निरस्य गीतेयमपूर्णमात्मनि ज्ञानं जनानामकृतात्मनां ततः ।
आत्मानमेकं श्रुतिसिद्धमव्ययं प्रदर्शयत्यार्षदृशा समीक्षितम् ।।४।।
तथा च गीतावचनस्य सर्वथा तात्पर्य्यसाम्यं श्रुतिभिः प्रदृश्यते ।
सर्वस्य तद्दर्शयितुं स्वभाषया तासां श्रुतीनां स्फुटमर्थ उच्यते ।।५।।

**आत्मस्वरूपनिरूपणे वेदवचन-गीतावचनयोस्तात्पर्य्यसाम्यावबोधाय पृथक्त्वेनातिसंक्षेपाद् वेदमन्त्रार्थतात्पर्य्यप्रकाशकब्रह्मविज्ञानसिद्धान्तोपदेशः ।।**

प्रजापतिरिदं सर्वं यज्ञः सत्यः स षोडशी ।
पश्यामो यं स यज्ञोऽयं स्थितः सत्यप्रजापतौ ।।१।।
**पाप्मा**[१] **वित्तं**[२] **प्राण**[३] **आत्मा**[४] चेत्येवं स चतुष्कलः ।
यावद् वित्तं तावदात्मा त्रिमात्रत्वात् स ओमिति ।।२।।
तत्रायमात्मा त्रिकलः **शुक्रं ब्रह्मामृतं** च तत् ।
अस्मिन् **प्राणाश्च वित्तानि पाप्मानश्च** प्रतिष्ठिताः ।।३।।
***वागापोऽग्निश्चा**मृतानि **वागापोऽग्निश्च** मृत्यवः ।
ब्रह्मसुब्रह्मणोर्योगाच्छुक्रं ब्रह्म द्विदेववत् ।।४।।
शुक्राणामाश्रयास्तेषां पञ्च प्रकृतयो मताः ।
त एव पञ्च ब्रह्माणः क्षरपञ्चकलामयाः ।।५।।
प्राण आपश्च वागन्नमन्नात् पञ्च क्षरा हि ते ।
ब्रह्मविष्ण्विन्द्रसोमाग्निसंज्ञाक्षरनियन्त्रिताः ।।६।।
स्वयंभूः परमेष्ठी च सूर्य्यश्चन्द्रः पृथिव्यपि ।
पञ्च ब्रह्माण इत्येते पूर्वपूर्वाहितोत्तराः ।।७।।
वाक् स्वयंभुवि, वागापः परमेष्ठिनि संश्रिताः ।
वागापोऽग्निश्च सूर्य्येऽस्मिन्नित्यं सन्ति त्रयोऽमृताः ।।८।।
अग्निरापश्च वाक् सूर्य्ये आपो वाक् चन्द्र आहिताः ।
वागियं पृथिवीत्येवं सन्त्यवाग् मृत्यवस्त्रयः ।।९।।

---

* सूर्य्यांशुर्वाग्-इन्द्रः, स कृष्णः । तत आपोऽसृज्यन्त ।। भृग्वङ्गिरसौ स्नेहतेजसी अधऊर्ध्वप्रवाहिणौ सुब्रह्मसंज्ञौ सुवेदरूपौ आपो नाम। तत्रैकतो भृग्वारूढोऽङ्गिरास्त्रेधा विभक्तः---अग्निर्वायुरादित्यः। ते त्रयो वर्णाः---धूम्रो रक्तो हिरण्यम् इति। सोऽग्निः शुक्रम्। अथान्यतोऽङ्गिरोध्यारूढो भृगुः---आपो वायुः सोम इति त्रेधा विभक्तः। ते त्रयो वर्णाः---नीलो हरितः पीत इति। ता आपः शुक्रम्। अनयोः प्रभवरूपो वागर्थः कृष्णो वर्णो मध्यस्थः। तथा चैतानि त्रीणि शुक्राणि---वाग् आपः अग्निरिति। ब्रह्म सुब्रह्म (भृ०) सुब्रह्म (अं)

सूर्य्यादर्वाग् मृत्युरग्निः सूर्य्यादूर्ध्वं तु सोऽमृतः ।
सूर्य्येऽमृतश्च मृत्युश्च द्वावग्नी तौ प्रतिष्ठितौ ॥१०॥
विश्वरूपाणि चैतेषां प्रत्येकमनुभावयेत् ।
परं परं तु पूर्वस्मिन् महत्यायतने धृतम् ॥११॥
आन्दं[1] पृथिव्यां, नक्षत्रं[2] चन्द्रे, संवत्सरो[3] रवौ ।
सामुद्रो[4]ऽसौ पारमेष्ठ्य आकाश[5]स्तु स्वयंभुवि ॥१२॥
अन्नाद्धि पृथ्वी, चन्द्रोऽन्नं, सूर्य्यो वाक् परमेष्ठ्यथ ।
अम्मयो हि ततस्तूर्ध्वं स्वयंभूः प्राणविग्रहः ॥१३॥
वेदब्रह्ममये सत्यलोके तावत् स्वयंभुवि ।
ब्रह्मा नियन्ता यस्तस्मै वेदाः प्रथमजा धृताः* ॥१४॥
गतिस्थितिमयं ब्रह्म स वायुर्यस्तु गच्छति ।
यस्तिष्ठति स आकाशस्तयोरन्योन्यगर्भता† ॥१५॥
तस्योदरे तु सुब्रह्म स्थितं भृग्वङ्गिरोमयम् ।
तेजोमयोऽङ्गिरास्तत्र रसः स्नेहमयो भृगुः‡ ॥१६॥
आपो वायुश्च सोमश्च स्निग्धास्ते भृगवस्त्रयः ।
आदित्यश्च यमश्चाग्निस्तेजांस्यङ्गिरसस्त्रयः ॥१७॥
द्विब्रह्मेदं ब्रह्मसत्यं प्राणगर्भितवाङ्मयम् ।
अथ षड्ब्रह्म सुब्रह्म ते उभे योनिरेत्तसी ॥१८॥
पञ्चीकृतानां प्रकृतिब्रह्मणां पुनरूर्ध्वतः ।
अमृतं पुरुषं विद्यात् क्षरमक्षरमव्ययम् ॥१९॥
तमेतमव्ययं कंचिदात्मानं श्रुतिराह मे ।
संवत्सरः समुद्रश्च तत्राकाशः प्रतिष्ठितः ॥२०॥
अपि नक्षत्रमान्दं च द्यावाभूमी च देवताः ।
नातः परं किञ्चिदस्ति तत्र सर्वं प्रतिष्ठितम् ॥२१॥
वृक्षेऽश्वत्थेऽव्यये तस्मिन् सुपर्णौ द्वौ प्रजापती ।
ईश्वरोऽन्योऽथ जीवोऽन्यः साक्षी भोक्ता च तिष्ठतः ॥२२॥
एकस्मिन्नीश्वरे जीवेष्वनन्तेषु च सोऽव्ययः ।
विभक्तेष्वविभक्तोऽयं विभक्तवदवेयते ॥२३॥
तमात्मानं विजानीयादव्ययं प्रकृतेः परम् ।
इहैव स्वाव्यये विद्यः परमीश्वरमव्ययम् ॥२४॥
तमेतमव्ययं गीता सर्वात्मत्वेन पश्यति ।
अप्यव्ययातिरिक्तानामात्मत्वं प्रतिषेधति ॥२५॥
**"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२६॥** (७।२४)

---

***शतपथे ११ का० १ अ० द्रष्टव्यम् ।**
**† शतपथे १० का० ३ अ० द्रष्टव्यम् ।**
**‡ गोपथे १।१।१।६ द्रष्टव्यम् ।**

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२७॥ (८।१७)**
**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२८॥ (८।१९)**

**इत्यात्मशिक्षा ।**

## २—आत्मधातू ब्रह्मकर्मणी

### २ —ब्रह्म-कर्म्मेत्यात्मनो धातुद्वयम्

(१) अव्ययस्यात्मनोऽस्य द्वे पर्वणी ब्रह्मकर्म्मणी ।
ब्रह्म विद्या, कर्म्म वीर्य्यम्, आत्मरूपमिदं द्वयम् ॥१॥
प्रतिक्षणं करोत्यात्मा जानात्यात्मा प्रतिक्षणम् ।
न करोति न जानाति यः स नात्मोपपद्यते ॥२॥
क्रियोदयरसो वीर्य्यं विद्या ज्ञानरसोदयः ।
ज्ञानोक्थमव्यये विद्या क्रियोक्थं वीर्य्यमव्यये ॥३॥
त्रयं[१] रूपं ह्येक आत्मा-उक्थं ब्रह्म च साम च ।
उक्थादुत्तिष्ठते, ब्रह्म भर्तृ, सामाखिले समम् ॥४॥
विद्योक्थमव्ययस्यार्द्धं वीर्य्योक्थं त्वर्द्धमुत्तरम् ।
तत्र धातुत्रयी विद्या वीर्य्यं धातुत्रयं परम् ॥५॥
(२) *प्रत्यर्थमात्मा गूढोऽयमव्ययः पुरुषः परः ।
सत्यकामात्मकः सोऽयमात्मा पञ्चकलो मतः ॥६॥
मनो विज्ञानमानन्द इत्यसौ मुक्तये त्रिधा ।
मनः प्राणश्च वाक् चेति त्रिकलः सृष्टये तु सः ॥७॥
(३) मनोमयप्राणगर्भा या वाक् सृष्टिस्ततोऽभवत् ।
यदिदं दृश्यते किञ्चित् सर्वं तद् वागिति स्थितिः ॥८॥
वाच्यन्तर्विततः प्राणो भास्वरः स मनोमयः ।
वाक्प्राणमनसामेकं कोशं विद्यात् तमच्युतम् ॥९॥
यद् ब्रह्म पञ्चधा योनिः, यच्च शुक्रमिह त्रिधा ।
आत्मप्राणमनःकोशे तत्र सर्वं प्रतिष्ठितम् ॥१०॥
मन आत्मा, हिताः प्राणाः, वाक् तत्रोपहिता मता ।
विम्बवन्मनसि प्राणा रश्मिवन्नित्यदा हिताः ॥११॥

---

**[१]शतपथब्राह्मणे १४ का० ४ अ० ३ ब्रा० द्रष्टव्यम् ।**

***अव्ययोऽन्तरतमो निगूढोत्मा कोशः ।**

| | | | | | | |
|---|---|---|---|---|---|---|
| **१** | **मनः** | **आत्मा** | **विद्या** | **ब्रह्म** | **प्रतिष्ठा** | **(अस्तीति धृतिः)** |
| **२** | **प्राणः** | **हितः** | **वीर्य्यम्** | **कर्म्म** | **विसर्गः** | **(उत्पन्नस्य व्ययः)** |
| **३** | **वाक्** | **उपहिता** | **अन्नम्** | **अर्थः** | **संग्राह्यः** | **(अन्यतः परिग्रहः)** |

विद्या कोशो मनः, प्राणो वीर्य्यकोशोऽथ वागिति ।
परतो गृह्यमाणानामन्नानां कोश इष्यते ॥१२॥
ब्रह्म विद्या, कर्म्म वीर्य्यमथार्थोऽन्नमिति त्रिषु ।
ब्रह्म प्रतिष्ठा, सास्तीति धृतिः, सर्वत्र भाव्यते ॥१३॥
सत उत्पद्य यद् व्येति स विसर्गो हि कर्म तत् ।
अन्यतस्त्वर्थ्यंते सोऽर्थस्तदन्नं परिगृह्यते ॥१४॥
ततो वाहयं हि संग्राह्यं भवत्यन्नं तदध्रुवम् ।
अथ विद्या च वीर्य्यं च नात्मनो ऽन्यत्र तिष्ठतः ॥१५॥

(४) अव्ययस्यात्मनो ऽस्य द्वे पर्वणी ब्रह्मकर्मणी ।
अमृतं ब्रह्म पूर्वार्द्धं मर्त्यं कर्मार्द्धमुत्तरम् ॥१६॥
ज्योतिर्ज्ञानं ब्रह्म विद्या, कर्म्म कर्मजवासना ।
आरम्भो मोह इत्येतौ धातू भवत आत्मनः ॥१७॥
अविनाभूतमुभयं ते आत्मैक उभे सह ।
कर्म्मणा विन्दते वीर्य्यं विद्यया विन्दते ऽमृतम् ॥१८॥*

(५) तत्र तद् द्विविधं कर्म्म यदेतद् वासनात्मकम् ।
कर्म्म प्रवर्तकं किञ्चित् किञ्चित् कर्म्म निवर्तकम् ॥१९॥
वासनायां वासनान्योपधानाच्चीयते यतः ।
प्रवृत्तं कर्म्म तत् स्थूलं ज्योतिराव्रियते ततः ॥२०॥
विद्याज्योतिस्तु जनयत् कर्म्मान्यिद् विद्यया तया ।
पौर्व्यं निवर्तयत् कर्म्म स्वयं सह निवर्तते ॥२१॥
यथा कलुषिते तोये निहितं कतकं रजः ।
मलं प्रशमयत् सर्वं स्वयमप्युपशाम्यति ॥२२॥
**'यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ॥२३॥'**
**'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।'**
निवृत्तं कर्म्म तद् विद्यात् तदनावरणं विदुः ॥२४॥

(६) तत्र वाग्बुद्धिकायानामारम्भः कर्म्मलक्षणम् ।
समानमस्ति, भेदस्तु कामासक्तिवशात् तयोः ॥२५॥
**'काम एष क्रोध एष रजोगुणसमुद्भवः ।'**
**'इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते' ॥२६॥**
कामासक्तिकृतं कर्मापूर्वं संस्कारमात्मनि ।
आधत्ते वासनां नाम ज्योतिराव्रियते ततः ॥२७॥
वासना नाम संस्कारः कामासक्तिसमुद्भवः ।
तमोमयो ऽव्ययस्यैतां विद्यामावृणुते पराम् ॥२८॥

---

| | | | | |
|---|---|---|---|---|
| *ब्रह्म | ज्योतिः | विद्या | ज्ञानम् | भावना |
| कर्म्म | मोहः | वीर्य्यम् | आरम्भः | वासना |

सर्वमेव तु तत् कर्म कामासक्तिविनाकृतम् ।
शिथिलं ज्योतिषा क्षुण्णं स्वयमेवोपशाम्यति ॥२९॥
तस्मात् सङ्गं च कामं च निवर्तयितुमात्मनि ।
बुद्धियोगे प्रवर्तेत सर्वशोकनिवृत्तये ॥३०॥
अत्रार्थे भगवद्वाक्यं गीतायां बहु दृश्यते ।
यथा त्रिगुणमायेयमात्मशक्तिं व्यपोहति ॥३१॥

(७) १–'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥३२॥'**
**२–'नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥३३॥'**
**३–'सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ॥**
**क्रोधाद् भवति संमोहः संमोहात् स्मृतिविभ्रमः ॥३४॥**
**स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥३५॥'**

(८) इत्थमावरणात् कामादात्मशक्तिर्विनश्यति ।
कामतो द्विविधं स्रोतो रागजं द्वेषजं तथा ॥३६॥
विज्ञानावरणं द्वेषाद् रागान्मनसि बन्धनम् ।
हृतात्मशक्तेर्विषयैर्बन्धनात्परतन्त्रता ॥३७॥
आनन्दज्योतिरप्यात्मा कामदोषेण दूषितः ।
यथा क्लिश्नाति संसारात् तदाह भगवान् स्वयम् ॥३८॥

**१–'काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥३९॥**
**२–चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥४०॥'**
**३–'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः' ॥७।२०॥**
**'लभते च ततः कामान् मयैव विहितान् हितान्' ॥७।२२॥**
**४–'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' ॥५।१५॥**
**५–'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज् ज्ञानं प्रकाशयति तत्परम्' ॥५।१६॥**
**६–'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥२।६४॥**
**७–प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते ।'२।६५॥**
**८–'रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ' ॥१४।७॥**
**९–'तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत' ॥१४।९॥**
**१०–'अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ' ॥१६।१६॥**

**११–'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥'१६।२३॥**
**१२–'अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।**
**शरीरस्थोपि कौन्तेय न करोति न लिप्यते' ॥१३।३२॥**

इत्यात्मधातुद्वयशिक्षा ।

## ३—ब्रह्मरूपा विद्याविभागास्त्रयः

मनो विज्ञानमानन्द इति विद्यात्रयी स्थिता।
ज्योतिर्विशेषो विज्ञानं रूपं संकल्पितं मनः ॥ १ ॥
कर्म्मण्यन्तरतो ज्योतिर्मनो, ज्योतिषि कर्म्म चेत् ।
तद् विज्ञानमथानन्दः कर्म्मास्पृष्टः पृथग् रसः ॥ २ ॥
त्रिष्वक्षरेषु भासन्ते तिस्रो विद्या विभागशः ।
ब्रह्मेन्द्रविष्णवो नित्याः सन्ति चैतेऽव्ययेऽक्षराः ॥ ३ ॥
तैरव्ययैस्त्रिभिर्धर्म्मैर्धर्म्मिणस्ते त्रयोऽक्षराः ।
धर्म्मत्रयवशाद् विश्वं शश्वदात्मनि बिभ्रति ॥ ४ ॥
आनन्दो ब्रह्मविद्यैन्द्री विद्या विज्ञानमस्ति मे ।
संकल्पो वैष्णवी विद्या त्रिषु तेषु त्रयी हिता ॥ ५ ॥
अद्धा तु यस्य भासन्ते बुद्धियोगादिमेऽव्ययाः ।
तस्य स्यात् सत्यसंकल्पः क्षुच्छोकाद्यूर्म्मिसंक्षयः ॥ ६ ॥
समृद्ध्यानन्दतो बुद्धिविज्ञाने मनसीन्द्रिये।
ब्रह्मवीर्य्ये सत्त्वगुणे सा सिद्धिर्नोपकल्पते ॥७॥

इति विद्यालक्षणज्ञानयोगशिक्षा।

## ४—कर्मरूपा वीर्य्यविभागास्त्रयः

मनः प्राणो वागितीदं वीर्य्यं कर्म्म त्रिधोदितम्।
मनः कामं तपः प्राणो वागियं सहते श्रमम्॥ १ ॥
**'कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत् ।**
**सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥२॥**
**ऋक् सं० १० मं० । ११ अ० । १२९ सू० । ४ मं०**

आत्मैष वाङ्मयः प्राणमयो भाति मनोमयः ।
अन्नादो ज्ञानवान् कुर्वद्रूप आत्मेति लक्ष्यते॥ ३ ॥
वीर्य्यं मनसि विद्यायै, प्राणे वीर्य्यं क्रियाकृते।
अन्नाय वीर्य्यं वाच्यन्नं त्वर्थो धामच्छदस्ति यः ॥ ४ ॥
वाच्यन्नं च, क्रिया प्राणे, ज्ञानं मनसि सज्जते।
जीवत्यन्नेन, चरति कर्म्मणा, वेत्ति विद्यया ॥ ५ ॥

यथान्नमाहरत्यन्तस्तथा विद्या च कर्म्म च ।
उदेत्यन्नरसासिक्ताद् वाक्प्राण मनसोऽव्ययात् ॥ ६ ॥
कर्म्म वीर्य्यं त्रिधा-ब्रह्म क्षत्रं विडिति भेदतः ।
विद्यां मनसि च, प्राणे बलं, वाच्यन्नमर्पति ॥ ७ ॥
ब्रह्मवीर्य्यं भोगहेतुः क्षत्रं विट् प्राप्तिकारणे ।
भोक्तेन्द्र आत्मेन्द्रियतो यथाप्राप्तं विपश्यति ॥ ८ ॥
विद्यामयं ब्रह्मवीर्य्यं क्षत्रं प्राणमयं बलम् ।
विडित्यन्नमयं वीर्य्यं कर्म्म वीर्य्यमिति त्रिधा ॥ ९ ॥
त्रिष्वक्षरेषु वर्त्तन्ते तानि वीर्य्याणि भिन्नवत् ।
ब्रह्म ब्राह्मं, क्षत्रमैन्द्रं, वैष्णवं कर्म्म तत्र विट् ॥ १० ॥
अक्षरास्तेऽव्यये नित्याः सन्ति ब्रह्मेन्द्रविष्णवः ।
तैरव्ययैस्त्रिभिर्धर्म्मैर्धर्म्मिणस्ते त्रयोऽक्षराः ॥ ११ ॥
सर्वधर्म्मोपपन्नश्च सर्वज्ञः सर्वशक्तिमान् ।
त्रिभिस्तैरक्षरैर्भाति स एकोऽव्यय ईश्वरः ॥ १२ ॥
इत्थं च विद्यावीर्य्याभ्यां द्वैधातव्योऽयमव्ययः ।
आत्मोपदिष्टो गीतायां जीवानामीश्वरस्य च ॥ १३ ॥

इति वीर्य्यलक्षण-कर्म्मयोगशिक्षा।

## ५—अनुशोकप्रत्ययदर्शनादात्मन आनन्दमयत्वे संशयः

अथात्मा यदि जीवानां विज्ञानानन्दविग्रहः ।
ततो विश्वजनीनेयं जिज्ञासोदेति भूयसा ॥ १ ॥
अनिच्छतः कुतो दुःखं यत्नेऽपि न सुखं कुतः ।
नाकस्मात् पततोऽकाले भवेच्छोकस्य निष्कृतिः ॥ २ ॥
सुखमिच्छतीह सर्वः सर्वो यतते सुखाय चाविरतम् ।
किन्तु सुखं न यथेच्छं लभते दुःखं त्वयत्नमतिबेलम् ॥ ३ ॥
दृश्यन्ते जन्तवोऽत्यन्तं क्लिश्यन्तो हन्त सन्ततम् ।
भूपालाः पण्डिता वीराः पामराः पशवः समम् ॥ ४ ॥
अत्युग्रयत्नवन्तोऽपि ते शोकप्रतिकर्म्मणि ।
न क्षमन्ते न चैकान्तं सुखं विन्दन्ति कर्हिचित् ॥ ५ ॥
शोकोत्थानं बहुविधं भवत्यज्ञातहेतुकम् ।
तैः पीड्यमानाः सर्वत्र दृश्यन्ते हन्त जन्तवः ॥ ६ ॥
अत्युल्वणं यदा दुःखं क्वचित्काले प्रशाम्यति ।
तदा तन्नु सुखत्वेन सर्वोभिमनुते जनः ॥ ७ ॥
दुःखविद्धं सुखं स्वल्पं यत्नसाध्यं क्वचिद् भवेत् ।
अयत्नसाध्यं बहुलं दुःखं प्रतिपदं स्थितम् ॥ ८ ॥
जीवधर्म्मोऽस्ति सामान्यात् प्रत्ययः सुखदुःखयोः ।
तत्र किं कारणं येन दुःखं बहु सुखं त्वणु ॥ ९ ॥
कुतोऽनवरतं दुःखं स्वतो बह्वनुवर्तते ।
अत्यल्पं तु सुखं यत्ने कृतेऽप्यस्तीव नास्ति वा ॥ १० ॥

असंभवो हि शोकोऽयमात्मानन्दमयो यदि ।
एतत्प्रश्नसमाधानं गीता शिक्षयतीह नः ॥ ११ ॥

इत्यात्मन आनन्दमयत्वसंशयः ।

## ६—शोककारणम्

### आत्मन आनन्दमयत्वसिद्धान्ते शोकप्रत्ययहेतुनिर्देशः

ध्रुवमात्मायमानन्दो यतः प्रियतमः स मे ।
सर्वेऽपि कामा आत्मार्थाः प्रियोऽन्योऽप्यात्मकारणात् ॥ १ ॥
आनन्दः स च विज्ञानज्योतिषि द्योतते स्फुटम् ।
पाप्मावृते तु विज्ञाने नानन्दः साधु भासते ॥ २ ॥
आत्माऽऽनन्दमयोऽप्येष निकाये पाप्मनां धृतः ।
विश्वैर्निकायैः संघर्षे विषीदत्येकदुर्बलः ॥ ३ ॥
जायते विश्वसंघर्षो निकाये त्वेव पाप्मनाम् ।
पाप्मावरणनाशे तु स संघर्षोऽपि नश्यति ॥ ४ ॥
निवृत्ते क्वापि संघर्षे दुःखशान्तौ सुखोदयः ।
लक्ष्यते तेन विद्योयमात्मानन्दमयः स्वतः ॥ ५ ॥
यदा तु पाप्मावरणं क्षीयते ब्रह्मवीर्य्यतः ।
विज्ञाने बलमायाति तदानन्दः स भासते ॥ ६ ॥
अथ स्वाभाविकोऽप्येष आनन्दो नित्यमात्मनि ।
यन्नावभासते तत्र त्रिविधं कारणं विदुः ॥ ७ ॥
[1]अज्ञानादात्मनः शोको नानन्दो ह्यात्मनोऽन्यतः ।
आत्मधातुद्वयस्यापि [2]वैषम्यं शोककारणम् ॥ ८ ॥
[3]अविद्याबुद्धिभेदानां चतुर्णामेकतोऽपि च ।
योगादात्मनि विद्याया मालिन्यं शोककारणम् ॥ ९ ॥

इति शोकोत्पत्तिकारणशिक्षा ।

## ७—जीवस्य भगवत्त्वसिद्धिः

तस्मादात्मावगन्तव्यो नात्मज्ञानात् परं सुखम् ।
अथेतरे दुःखमेवापियन्तीति श्रुतिर्जगौ ॥ १ ॥
वीर्य्यं विद्येत्युभौ धातू आत्मनः समतां नयेत् ।
आत्मना विन्दते वीर्य्यं विद्यया विन्दतेऽमृतम् ॥ २ ॥
अविद्याच्छन्नविद्याया विकासात् सुखसंविदे ।
चतुर्विधो बुद्धियोगो नेयः पाप्मापहारकः ॥ ३ ॥
बुद्धियोगवशाज्जीवो विद्यावीर्य्यप्रभावतः ।
षण्णां भगानामाधानाद् भगवानीश्वरो भवेत् ॥ ८ ॥

## ८—शोकनिवारणम्

### अनुशोकव्युत्थानकारणनिर्देशः

अथात्मनः कथं हेयास्त्रयोऽमी शोकहेतवः ।
उपादेयाः कथं चान्ये शोकप्रशमहेतवः ॥ ९ ॥
इति जिज्ञासमानेभ्यो गीता शिक्षयतीह नः ।
आत्मैव साक्षात्क्रियतां समत्वं योग इष्यताम् ॥ १० ॥
**"नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥११॥**
**दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१२॥"**
विद्ययानन्दमाप्नोति सा विद्या धातुरात्मनः ।
विद्यानाशेऽथवा कर्म्मनाशे शोकोऽनुवर्तते ॥ १३ ॥

## ९—कर्मात्यन्तसंन्यासस्य शोकव्युत्थापकत्वप्रत्याख्यानम्

ये त्वत्र केचिदाचार्य्याः कर्म्मनाशं हितं विदुः ।
कृत्स्नकर्म्मक्षये मोक्षो भवतीति प्रचक्षते ॥ १ ॥
वासना नाम संस्कारस्तेषां कर्म्म तदिष्यते ।
कर्म्मणा जनितेऽपूर्वे कर्म्मशब्दः प्रवर्त्तते ॥ २ ॥
वासनाकर्म्मणां कार्त्स्न्यात् क्षये मोक्षोऽभिधीयते ।
अपवर्गाद् बन्धहेतोर्विद्यावरणकर्म्मणः ॥ ३ ॥
द्विविधं कर्म्म, तामिस्रं विद्यामावृणुते हि तत् ।
सात्त्विकं तु ब्रह्मवीर्य्यं ज्योतिस्तन्नावृणोति हि ॥४॥
कर्म्मानावरकं विद्यामयं न त्याज्यमिष्यते ।
**"कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः" ॥५॥**
तस्मान्नैकान्ततः कर्म्म परित्याज्यं मुमुक्षुभिः ।
**"न कर्म्मणामनारम्भान्नैष्कर्म्म्यं पुरुषोऽश्नुते" ॥६॥**
**"स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः" ॥**
**"सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्" ॥७॥**
**"योगिनः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये" ॥**
**"सर्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते" ॥८॥**
**"त्यक्त्वा कर्म्मफलासङ्गं नित्यतृप्तो निराश्रयः ॥**
**कर्म्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः" ॥९॥**
तस्मादवश्यं कर्तव्यं कर्म्मानावरकं तु यत् ॥
"नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत्" ॥१०॥
कर्म्मात्मरूपमत्यन्तं यः कर्म्म त्यक्तुमिच्छति ।
आत्मनैव स हीयेत सोऽत्यन्तं क्लेशमाप्नुयात् ॥ ११ ॥

**इति शोकव्युत्थानकारणशिक्षा ॥**

## १०—धातुसाम्यम्

### ब्रह्मकर्मणोर्विद्यावीर्य्ययोरात्मधात्वोः समीकरणसिद्धान्तस्थापनम् ।

तस्मादेकान्तविजयाद् यथाभूतात्मकर्म्मणः ।
विद्यावरणतो लोके शोकः सर्वत्र दृश्यते ॥ १ ॥
तथैवात्मनि विद्याया एकान्तविजयादपि ।
वीर्य्यत्रयात्यन्तनाशादानन्दानुभवात्ययः ॥ २ ॥
तस्मान्न केवलं कर्म्म न विद्या केवला श्रिये ।
इति वाजसनेयोपनिषद्यपि निरुच्यते ॥ ३ ॥
**"अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ॥**
**ततो भूय इव ते तमो य उ विद्यायां रताः" ॥४॥ (ईशावा० ९)**
तस्मादात्मनि विद्यां च वीर्य्यं च समतां नयेत् ।
विद्यासापेक्षकर्म्माणि कुर्वीत सह विद्यया ॥ ५ ॥
विद्यानपेक्षं कर्म्माणि ये जनाः पर्य्युपासते ।
विशन्ति ते तमस्यन्धे शुद्धाविद्यानुशीलनात् ॥ ६ ॥
त्यजन्ति नित्यकर्म्माणि येऽमी विद्यापरायणाः ।
विद्याकर्म्मोभयभ्रष्टास्ते यान्ति परमं तमः ॥ ७ ॥
**"न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥"**
विद्यामपेक्षमाणो हि कर्म्म [१]तद्धेतुमर्हति ॥८॥
विद्याप्रावरणं कर्म्म कर्म्मणैव निवर्त्तते ।
मृदा हि मृन्मलं व्येति कण्टकेन च कण्टकम् ॥ ९ ॥
निराकरणतो ननं विद्यावरणकर्म्मणाम् ।
आत्मज्योतिर्नित्यसिद्धं लब्धमेवानुलभ्यते ॥१०॥
न विद्यया विना कर्म्म संसिद्धिं साधु गच्छति ।
कर्म्मैवापेक्षमाणोऽपि विद्यां [२]तद्धेतुमर्हति ॥ ११ ॥
परस्परानपेक्षित्वं निषिद्धं कर्म्मविद्ययोः ।
निर्विद्यकर्म्मणा नार्थो नार्थो निष्कर्मविद्यया ॥ १२ ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म्म वैदिकम् ।
निवृत्तकर्म्मणा मृत्युरात्मबन्धो निवर्तते ॥ १३ ॥
निवृत्तं कर्म्म विद्यां च सहोपासीत युक्तवत् ।
गीता शिक्षयतीत्यर्थं श्रुतिरप्याह तं तथा ॥ १४ ॥
**"अन्धं तमः प्रविशन्ति ये अविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायां रताः ॥ (ईशावा० ९)**
**विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ (ईशावा० ११)**
**संभूतिं च विनाशं च यस्तद्वेदोभयं सह ।**
**विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते ॥ (ईशावा० १४)**

---

[१] **विद्याहेतुम् ।** [२] **कर्महेतुम् ।**

प्रवृत्तं वा निवृत्तं वा कर्म्माविद्येति कथ्यते ।
निवृत्तकर्म्मणा मृत्युबन्धं तरति वासनाम् १५॥
प्रवृत्तिः संभवो नाशो निवृत्तिरुभयं सह ।
सहावरणनाशेन विद्याभ्युदयसंभवः ॥१६॥
तथा हि कर्म्म कर्तव्यं मृत्युः सम्रियते यतः ।
सह मृत्योर्विनाशेन स्वानन्दामृतसंभवः ॥१७॥
यदनावरणं कर्म्म तेन विद्या न लुप्यते ।
सिद्धिविद्या त्रिवीर्य्यं च धातू साम्येन तिष्ठतः ॥१८॥
ब्रह्मवीर्य्याद् वीर्य्यविद्या गुणविद्या तु सत्त्वतः ॥
अवरे ते पृथग्विद्ये कर्म्मणी एव कर्म्मणि ॥१९॥
सतीभ्यामपि विद्याभ्यामवराभ्यां तु नात्मनः ॥
प्रख्यायते धातुसाम्यं कर्म्मत्वाज्ज्योतिषोस्तयोः ॥२०॥
**शान्तिः सुखं जन्तुषु धातुसाम्याद् वैषम्यतो दुःखमुपैति तस्मात् ॥**
**यद् ब्रह्म यत् कर्म्म तयोः समत्वं नयेति नः शिक्षयतीह गीता ॥२१॥**
यथाग्नौ स्थूलदेहेऽस्मिन् वैषम्यं रोगकारणम् ।
वातपित्तकफादीनां साम्यं स्वास्थ्यकरं यथा ॥२२॥
यथा प्राज्ञे सूक्ष्मदेहे वैषम्यं रोगकारणम् ।
कामक्रोधादि-षड्धातुसाम्यं स्वास्थ्यकरं यथा ॥२३॥
ब्रह्मकर्म्ममयस्तद्वद् द्विधातुरयमव्ययः ।
तेनात्मनः स्वास्थ्यहेतुः समत्वं वीर्य्यविद्ययोः ॥२४॥
अविद्याबुद्धयो नित्यमुद्रिक्ताः प्राणिषु स्वतः ।
ताः प्रतिद्वन्द्विसद्विद्याबुद्धिभिः शमयेत् क्रमात् ॥२५॥
विद्यावरणहेतूनां निवृत्त्या पापकर्म्मणाम् ।
सिद्धिविद्याप्रकाशः स्यात् तत आनन्दसिद्धयः ॥२६॥

**इत्यात्मधातुसाम्यशिक्षा ॥०॥**

## प्रकरणोपसंहारः

**"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे"** ॥
इत्थमावरणध्वंसं हृद्ग्रन्थीनां च विच्युतिम् ।
अपि संशयविच्छेदं गीता शिक्षयतीह नः ॥१॥
शिक्षयत्यात्मविद्यायां ब्रह्म यत् परमव्ययम् ।
बुद्धियोगं च निष्ठायां गीता शिक्षयतीह नः ॥२॥
विद्यास्वनेकभेदासु विद्याद् ब्रह्माव्ययं परम् ।
निष्ठास्वनेकरूपासु बुद्धियोगे स्थितिं नयेत् ॥३॥
अपि नः शिक्षयत्येषा ब्रह्मविद्यां चतुर्विधाम् ।
चतुर्विधं च तत्कर्म्म यन्न बन्धाय जायते ॥४॥
मनुष्ये चाव्यये कृष्णे वक्ति साम्यादहं-पदम् ।
गीतासंक्षेप इत्युक्तो विस्तरः पुनरुच्यते ॥५॥

**इति गीतातात्पर्य्यनिरुक्तौ द्वितीयः प्रकाशः ॥**

## ३

## ३२ अथ विद्याचतुष्टय-योगचतुष्टयशिक्षालक्षणो ब्रह्मकर्म्माभिनयस्तृतीयः प्रकाशः

### ब्रह्म-कर्म्म-स्वरूपविवेकः

१—अथ विस्तरतो ब्रूमः पुनर्ब्रह्म च कर्म्म च ।
बुद्धियोगो, ज्ञानयोगः, कर्म्मयोगो यदाश्रयात् ॥१॥
ज्योतिस्तमश्च सदसच्चामृतं मृत्युरित्युभे ।
रसो बलं चेति तत्त्वे ब्रूमस्ते ब्रह्मकर्म्मणी ॥२॥
ज्ञानं ब्रह्म, क्रिया कर्म्म, ब्रह्म-कर्म्म-समन्वयात् ।
रूपं यदुदितं तद्वै विश्वमस्ति च भाति च ॥३॥
पुरा ब्रह्मर्षयः पूर्वे ते चोभे ब्रह्मकर्म्मणी ।
बहुधा परिपश्यन्तो भिन्नवद् व्याचचक्षिरे ॥४॥
व्याख्यातं यद् यथा पूर्वैस्तत्तथा साधु भाव्यताम् ।
यत्त्वत्र किञ्चिदधिकं वक्तव्यं तदिहोच्यते ॥५॥

### गीताया ब्रह्मविज्ञानत्वादात्मशास्त्रत्वम्

२—आत्मा ब्रह्म, यतश्चैतद् ब्रह्मतत्त्वमिहोच्यते ।
तस्मादाहुरिमां गीतामात्मशास्त्रं विपश्चितः ॥१॥
[४] **विद्याश्चेहोपनिषद**[२] [४] **श्चोपदेशा**[१] [६०] ऽहात्मनः ।
इत्थं विभक्तमस्त्यात्मशास्त्रं गीताप्रतिष्ठितम् ॥२॥
यद् विश्वमूलं तद् ब्रह्माव्ययं नाम स पूरुषः ।
परापरे तु तस्य द्वे प्रकृती अक्षरक्षरे ॥३॥
[१] क्षरमेवाऽहुरात्मानमेकेऽन्येतु क्षरेऽक्षरम्[२] ।
गीतायां भगवानाह पुरुषोत्तममव्ययम्[३] ॥४॥
आत्मनः सृष्टिकर्तृत्वान् मन्यन्ते परिणामिताम् ।
ये क्षरात्मविदस्तेषां सात्र दृष्टिर्निरस्यते ॥५॥
**'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम्'** ॥६॥
आत्मायमव्ययो द्वाभ्यां धातुभ्यां व्यवतिष्ठते ।
विद्या ज्योतिः, कर्म्म वीर्य्यमेक आत्मोभयं सह ॥७॥
जानामीति मम ज्योतिस्तन्मे वीर्य्यं करोमि यत् ।
जानामीति करोमीति स आत्मा विश्वरूपधृक् ॥८॥
मनो विज्ञानमानन्दो विद्या ज्योतिस्त्रिधात्मनः ।
मनोमयप्राणगर्भा वाग् वीर्य्यं कर्म्म विश्वसृट् ॥९॥

### ५—बुद्धियोगः

### गीतायाः कर्म्मविज्ञानत्वाद् योगशास्त्रत्वम्

३—अथोपदिश्यते कर्म्म बुद्धियोगाह्वयं परम् ।
कर्म्मयोगे भक्तियोगे ज्ञानयोगेऽनुसंहितम् ॥१॥

जना विदुः कर्म्मयोगं ज्ञानयोगं तु पण्डिताः ।
गीतायां भगवानाह बुद्धियोगं चतुर्विधम् ॥२॥
दुःखशान्तिः सुखोदर्कः कर्म्मयोगस्य लक्षणम् ।
तदस्ति बुद्धियोगेऽपि तन्नासक्तेन कामतः ॥३॥
निस्त्रैगुण्यं च नैष्कर्म्यं ज्ञानयोगस्य लक्षणम् ।
तदस्ति बुद्धियोगेऽपि कर्म्मसंन्यासतो न तत् ॥४॥
सांख्यानां कर्म्मसंन्यासे कामासक्त्योस्तु योगिनाम् ।
या निष्ठा तां निरस्यात्र बुद्धियोगो विधीयते ॥५॥
विसर्गः कर्म्म [1]योगश्च [2]विभूतिश्चेह वर्ण्यते ।
तस्मादाहुरिमां गीतां योगशास्त्रं विपश्चितः ॥६॥
लक्ष्यगीता, बुद्धियोगः, साम्यवादास्तदन्तरे ।
इत्थं क्लृप्तं योगशास्त्रमस्ति गीताप्रतिष्ठितम् ॥७॥

## ६—गीताया आत्मशास्त्रत्वे विषयविभागाः

### आत्मविद्या-बुद्धियोग-साम्यवादा-त्मसाक्षात्काराणां चातुर्विध्यम्

४—अमृतं[1] [2]ब्रह्म शुक्रं[3] चेत्यात्मविद्या त्रिधेष्यते ।
तत्रामृतेऽव्ययः पूर्व्यस्तद्विद्येह प्रदर्श्यते ॥१॥
गीता [1]चतुर्विधा विद्या [2]चतुर्द्धा तत्र चाव्ययम् ।
चतुर्विधो[3] बुद्धियोगस्तत्र साम्यं[4] चतुर्विधम् ॥२॥
शास्त्रस्वरूपं गीताया एतावदिह निश्चितम् ।
तदेतत् सुखबोधार्थं वैशद्येनोपपाद्यते ॥३॥

## आत्मविद्याचतुष्टयी-विषयविभागाः

५—येयं भगवता गीता याऽव्ययब्रह्मबुद्धिकृत् ।
आत्मविद्या सोपनिषत् तत्र विद्या चतुर्विधा ॥१॥
[1]**वैराग्यविद्या** प्रथमा **भगवत्**संमतोच्यते ।
अपि **राजर्षिविद्यैषा** प्रोक्ता सेयं **सनातनी** ॥२॥
बुद्धियोगस्वरूपं तु विशेषादत्र वर्णितम् ।
तत्राविरोधादेकत्वं नीयते सांख्ययोगयोः ॥३॥
**ज्ञानविद्या**[2] **सिद्धविद्या** सिद्धैरेषा प्रवर्तिता ।
निर्गुणात्मज्ञानयोगस्वरूपं तत्र दर्शितम् ॥४॥
**राजविद्यैश्वर्य्यविद्या**[3] कुले राज्ञां निगूहिता ।
भक्तियोगस्वरूपं तु विशिष्येहोपदिश्यते ॥५॥
भक्तियोगवशादस्मादीश्वरे सगुणात्मनि ।
नीयते भक्तितामेष जीवात्मैश्वर्य्यसिद्धये ॥६॥
**धर्म्मविद्या**[4] **त्वार्षविद्या** चतुर्थीहोपदिश्यते ।
कर्म्मयोगस्वरूपं तु विशेषादत्र वर्ण्यते ॥७॥

३

त्रैगुण्यविषया वेदा वेदविद्यासमुच्चितम् ।
*तथा कर्म्मेह संप्रोक्तं यथाऽनावरकं भवेत् ॥८॥

## आत्मविद्याचतुष्टयी-श्लोकविभागाः

६ (१) **अहो बत महत् पापं कर्तुं व्यवसिता वयम् (१।४५)**
इति विज्ञानगीतायां प्रारम्भः श्लोक इष्यते ॥१॥
तदारब्धं श्लोकषट्कं चातुर्विद्यावतारणा ।
तत्रार्जुनपरीतापस्तन्निराकृत्युपक्रमः ॥२॥

(१) **अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥ २।११ ॥**
इति **वैराग्यविद्योक्ता** पूर्वा श्लोकैस्तु तूपरैः (२१६) ॥३॥

(२) **मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ॥७।१॥**
इत्यतः **सिद्धविद्येयं** श्लोकैः समकृतैः (५७) कृता ॥४॥

(३) **इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥९।१॥**
इत्यतो यमकश्लोकैः **(१५१) राजविद्योपदिश्यते** ॥५॥

(४) **इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ॥१३।१॥**
इत्यतो धीधयश्लोकैः **(१९९) रार्षविद्या** प्रवर्तते ॥६॥

(५) **इदं ते नातपस्काय नाभक्ताय कदाचन ॥१८।६७॥**
इत्यतो (१०) दशभिस्तूपसंहारः प्रतिपद्यताम् ॥७॥

(६) **तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥१८।७८॥**
इतिश्लोकेन विज्ञानगीताशास्त्रं समाप्यते ॥८॥

(२) श्लोकाः षट्[६] षोडशोद्रिक्त[२१६]द्विशती त्र्यून५७षष्टिकाः ।
शतं तथैक [१५१]पञ्चाशदेकोनद्विशतीति[१९९] च ॥९॥
दशैव तूपसंहारे श्लोका इत्थं समुच्चिताः ।
नवत्रिंशत्समेतानि षट्[६३९]शतानीति भाव्यताम् ॥१०॥
वैज्ञानिका इमे श्लोका धीगता[६३९] इह संचिताः ।
अन्ये श्लोका एकषष्टि[६१]रितिहासोपयोगिनः ॥११॥

| | | | | |
|---|---|---|---|---|
| ***भगवद्विद्या** | **राजर्षिविद्या** | **वैराग्यविद्या** | **बुद्धियोगः** | **वैराग्यबुद्धियोगः** |
| **निर्गुणात्मविद्या** | **सिद्धविद्या** | **ज्ञानविद्या** | **ज्ञानयोगः** | **ज्ञानबुद्धियोगः** |
| **सगुणात्मविद्या** | **राजविद्या** | **ऐश्वर्य्यविद्या** | **भक्तियोगः** | **ऐश्वर्य्यबुद्धियोगः** |
| **कर्म्मात्मविद्या** | **आर्षविद्या** | **धर्म्मविद्या** | **कर्म्मयोगः** | **धर्म्मबुद्धियोगः ।** |

**ब्रह्मणि कर्म्माधानात् कर्म्मसु ब्राह्मी स्थितिरित्युभयोः समत्वं योगः ॥ न तु वैषम्यादेकस्याभिभवेऽन्यस्य विभूतिः। विद्यावरकवासनाकर्म्मनिवृत्तौ अनावरकनिवृत्तिकर्म्मसत्त्वेपि ज्ञानानभिभवाद् ब्रह्मकर्म्मणोः समत्वम् ॥ विद्यावरक-वासनानिवृत्तिश्चतुर्धा---वैराग्याद्---ज्ञानाद्---ऐश्वर्य्याद्---धर्म्माच्चेति। कर्म्मसु विद्यावरकताया आसक्तिकामाभ्यामुत्पत्तेः, तयोश्चतुर्धा निवृत्तौ चतुर्धा कर्म्मणा विद्यानभिभवात् ॥**

अध्यायक्रमपक्षेऽपि चातुर्विद्यं विभज्यते ।
[६]षड्भिर्द्वाभ्यां[२] [४]चतुर्भिश्च [६]षड्भिर्विद्याः पृथक् कृताः ॥१२॥

(३) इत्थं गीता चतसृभिर्विद्याभिः कृतविग्रहा ।
ताश्च विद्याश्चतस्रोऽपि शोकव्युत्थानहेतवः ॥१३॥
लोके शोकसमुत्थानं प्रकृत्या सिद्धमस्ति यत् ।
तद्भैषज्योपायभूता अर्जुने दर्शिता इमाः ॥१४॥

## १—भगवद्विद्या

१–चतसृषु च विद्यासु प्रामाण्यं तारतम्यतः ।
भगवत्संमतिर्यत्र यथोपादेयता तथा ॥१॥
प्रथमा तत्र राजर्षिविद्या वैराग्यलक्षणा ।
यस्यां कर्म्मज्ञानसाम्यं सा विद्या भगवत्प्रिया ॥२॥

२–**"ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१॥
अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥२॥**

.................................

**कुर्वन्नेवेह कर्म्माणि न करोति न लिप्यते ॥३॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥४॥
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥५॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढाँस्तान् विद्धि नष्टानचेतसः ॥६॥**

## २—सिद्धविद्या

१–द्वितीया सिद्धविद्या सा कर्म्मसंन्यासलक्षणा ।
निर्गुणात्मज्ञानरूपा नात्यन्तं भगवत्प्रिया ॥१॥

२–**'सर्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते' ।
'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' ॥२॥
'गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥'
'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' ॥३॥
'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्' ॥४॥
'ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते ।'
'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्' ॥५॥**

## ३—राजविद्या

१–तृतीया राजविद्योक्ता तत्रेश्वर उपास्यते ।
भक्तिर्ज्ञानस्य कर्म्मास्यां सा चास्ति भगवत्प्रिया ॥१॥

२–'मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः' ॥२॥
'यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः' ॥३॥
'मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः' ।
'हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः' ॥४॥
'सर्वारम्भपरित्यागी भक्तिमान् यः स मे प्रियः' ।
'अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः' ॥५॥
'ये तु धर्म्म्यामृतमिदं यथोक्तं पर्य्युपासते ॥
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मत्प्रियाः' ॥६॥

## ४—आर्षविद्या

१–यत्रोक्तः कर्म्मकाण्डार्थो धर्म्मस्त्रिगुणकर्म्मजः ।
चतुर्थी सार्षविद्यापि नात्यन्तं भगवत्प्रिया ॥१॥
२–श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥२॥
'यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' ॥३॥
'यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय मुक्तसङ्गः समाचर' ॥४॥
'उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः' ॥५॥
'यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः' ॥६॥

## ५—चातुर्विद्योपसंहारः

१–'य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः' ॥१॥
'न च तस्मान् मनुष्येषु कश्चिन् मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि' ॥२॥
'अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः' ॥३॥

## बुद्धियोगचातुर्विध्यम्

विद्याभिराभिः सर्वाभिर्बुद्धियोगो विधीयते ।
बुद्धिश्चतुर्द्धा तद्योगः स्यादुपायैश्चतुर्विधैः ॥१॥
(१) ज्ञानयोगमयो बुद्धियोगो वैराग्यविद्यया[१] ।
स चानासक्तिनिष्कामकर्म्मयोगानुसंहितः ॥२॥
(२) कर्म्मयोगमयो बुद्धियोगोऽन्यो धर्म्मविद्यया[४] ।
धर्म्मबुद्धिकृतो योगो गुणवत्कर्म्मसंहितः ॥३॥

सिद्ध[२]विद्याराज[३]विद्ये ब्रह्मविद्ये इहान्तरे ।
(३) निर्गुणब्रह्मविद्यास्यां सिद्धविद्येति कथ्यते ।।४।।
नैर्गुण्यं ज्ञानकाण्डार्थो ज्ञानमात्मैकतागतिः ।
नैष्कर्म्यं कर्म्मसंन्यासो **ज्ञानयोग** इह स्मृतः ।।५।।
येयं गुणमयी दैवी योगमाया दुरत्यया ।
तदपाकरणादात्मज्योतिराभाति सूर्य्यवत् ।।६।।
(४) **ऐश्वर्य्यविद्या** सगुणब्रह्मविद्याऽवधीयते ।
उपासना सा सगुणब्रह्मविद्येश्वरे गतिः ।।७।।

## परापराख्यमुक्तिद्वैविध्यम्

निर्गुणब्रह्मविद्यायां ज्ञानादात्मनि या गतिः ।
सा परा मुक्तिराख्याता द्वैतप्रज्ञात्र मुच्यते ।।८।।
सगुणब्रह्मविद्यायां जीवात्मगतिरीश्वरे ।
सा ख्याता मुक्तिरपरा द्वैतं तत्रावशिष्यते ।।९।।
सालोक्यादथ सामीप्यात् सारूप्याच्च सयुक्त्वतः ।
संयुनक्तीश्वरे जीवो न तु द्वैतं निवर्तते ।।१०।।
जन्मबन्धविनिर्म्मोकेऽप्यस्ति जीवस्य भक्तिता ।
सालोक्यादिष्ववस्थासु तारतम्यं सुखे ध्रुवम् ।।११।।

## विद्यासमुच्चितकर्म्मणा आत्मप्रसादादीश्वरसाधर्म्ये जीवस्य भगवत्त्वसिद्धिः

इत्थं विद्याचतुष्टय्यां बुद्धियोगप्रसङ्गतः ।
विद्यानुबन्धि व्याख्यातं कर्म्माशेषमबन्धनम् ।।१२।।
विद्यया सह कर्म्माणि कुर्वतो बुद्धियोगतः ।
निरावरणताहेतोर्विद्ययाऽऽत्मा प्रसीदति ।।१३।।

**"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।।२।६४।।**
**प्रसादे सर्वदुःखानां हानिरस्योपजायते ।**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते" ।।२।६५।।**

प्रसीदन्त्यात्मधर्म्माणि सर्वाण्यात्मप्रसादतः ।
विकासादात्मशक्तीनां भगवानीश्वरो भवेत् ।।१४।।
स एष परमो जीवानुग्रहो गीतया ऽऽप्यते ।
षण्णां भगानां संप्राप्त्या यदेष भगवान् भवेत् ।।१५।।
स जीवन्नेव भगवानीश्वरानन्दमश्नुते ।
**'कुर्वन्नेवेह कर्म्माणि न करोति न लिप्यते'** ।।१६।।

## अव्ययविद्यायां बुद्धिविद्याया योगस्य कर्तव्यत्वादेशः

येयं भगवता गीतोपनिषत् कर्म्मबुद्धिकृत् ।
तद्योगशास्त्रं जानीयाद् योगः कर्म्मसु कौशलम् ।।१।।

विज्ञानं नाम या बुद्धिः प्रज्ञाने प्रतिभाति नः ।
अव्ययात्मनि यस्तस्या योगो योगः स इष्यते ॥२॥
विद्या च कर्म्म चेतीत्थं द्विकलः पुरुषोऽव्ययः ।
योगमायावृतस्तत्र विद्याभागोऽस्त्यनुल्वणः ॥३॥
**'नाहं प्रकाशः सर्वस्य योगमायासमावृतः'** (७।२५)
इत्याह भगवाँस्तेन कर्म्मणि प्रवणो जनः ॥४॥
अनुल्वणात्मविद्येपि ज्ञानमात्मनि भाति यत् ।
तद् ब्रह्मवीर्य्यवत्सत्त्वगुणोद्रेकाद् विकारजम् ॥५॥
यथा दिवाऽऽतपालोकाभावेऽप्याभाति वासरः ।
तथा चिदात्माऽप्रत्यक्षेऽप्येष देहः सचेतनः ॥६॥
भगवान्नारदः*प्राह ज्ञानमात्मनि पञ्चधा ।
**योगजं[१], [२]शुद्धचैतन्यं, [३]सत्त्वजं, [४]बौद्ध-[५]मानसे** ॥७॥
तत्र द्विविधमाद्यं तु प्रव्यक्तं न प्रकाशते ।
[१]**योगजं** योगिनामेव यतः सन्त्यष्टसिद्धयः ॥८॥
शुद्ध[२]मेव तु **चैतन्यं** सूर्य्यचन्द्रादितेजसि ।
भूतज्योतिर्भवद् भाति ज्ञानं [४]**बौद्धं** च [५]**मानसम्** ॥९॥
**'यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्'** ॥१५।१२॥
सौरमेव तु विज्ञानमदित्या महति स्थितम् ।
सत्त्वं जनयते ज्ञानं ज्योत्स्नामिव रवेः करः ॥१०॥
सम्यगेवमाह चैतामदितिं भगवान् कठः—
**"या प्राणेन संभवति–अदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत"** ॥ **कठोप०** ।२।४।

## अव्ययात्मविद्याप्रकाशलक्षणानि

पञ्चरात्रे नारदेन ज्ञानं यत् पञ्चधोदितम् ।
योगसिद्धिकृतं तत्र ज्ञानमेकं विशिष्यते ॥१॥
यतस्त्रैकालिकं ज्ञानं समं दूरे तथाऽन्तिके ।
व्यवधानेऽतीन्द्रिये च दिव्ये चालौकिके च धीः ॥२॥
यतोऽणिमा च महिमा गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चोपपद्यते ॥३॥
अव्ययस्यात्मनो विद्याभागो यस्य प्रसीदति ।
तस्यैते कथिता ह्यर्थाः कामचारोऽस्य कर्म्मणि ॥४॥
कर्म्मभागस्य विजयाद् विद्याभागोस्त्यनुल्वणः ।
तस्मात् सर्वेषु सामान्याद् योगसिद्धिर्न दृश्यते ॥५॥

---

*** नारदपाञ्चरात्रे ।**

## कर्म्मात्मकवीर्य्यत्रयलक्षणानि

उद्रिच्यते ब्रह्मवीर्य्यं क्षत्रे वा विशि वा तदा ।
स ज्ञानोद्रेकमाहात्म्याच्छ्रैष्ठ्यं याति स्वकर्म्मसु ॥१॥
कर्म्मवीर्य्यं तत् त्रिधाऽस्ति ब्रह्म क्षत्रं विडित्यपि ।
विडन्नग्रहणं वीर्य्यं यज्ञकृद्विष्णुदैवतम् ॥२॥
चेतनग्रहणं वीर्य्यं क्षत्रं जीववशीक्रिया ।
निग्रहानुग्रहौ कुर्वन् शास्ति कामं नयन् पथि ॥३॥
तत् कर्म्मैन्द्रमथ ब्रह्मवीर्य्यं ब्रह्मणि कर्म्म यत् ।
तज्ज्योतिर्लक्षणं वीर्य्यं तत् कर्म्म ज्ञानलक्षणम् ॥४॥
कर्म्मानुबन्धिज्ञानेन तेन कर्म्म प्रकाशते ।
क्षत्रे विशि ब्रह्मवीर्य्याद् वीर्य्ये वीर्य्यं निधीयते ॥५॥
अक्षरत्रयभेदेन त्रिधा कर्म्मेदमात्मनि ।
तारतम्येन लोकेऽस्मिन् स्वभावादनुवर्त्तते ॥६॥

## विद्याकर्मणोरन्योन्यसापेक्षत्वम्

विद्याभागस्य मालिन्यात् कर्म्माप्यस्यावसीदति ।
नानन्दं लभते पूर्णं न विजानाति पूर्णवत् ॥१॥
सुखार्थं कर्म्म कुर्वाणो नात्यन्तं विन्दते सुखम् ।
तस्मादानन्दलब्ध्यर्थं विज्ञानप्रवणो भवेत् ॥२॥
न कर्म्मणा विना तच्च विज्ञानं भवति क्वचित् ।
तस्मात् कर्म्मापरित्यज्य विद्याभागमुपार्जयेत् ॥३॥
कर्म्मणा विद्यया चात्मा प्रव्यक्तः सुप्रसीदति ।
विद्ययाऽऽनन्दमाप्नोति कर्म्मणा सर्वशक्तिमान् ॥४॥

## विद्याकर्मवैषम्यस्य दुःखानुविधायितया तत्साम्योपायप्रदर्शनार्थं गीताशास्त्रप्रवृत्तिः

आत्मनो ह्युभयं रूपमस्ति विद्या च कर्म्म च ।
प्रतिक्षणं करोत्येष जानात्येष प्रतिक्षणम् ॥१॥
अविद्यया त्वावरणाद् विद्या मालिन्यमागता ।
नात्यन्तमुल्वणं ज्ञानं न चानन्दः प्रवर्त्तते ॥२॥
अस्ति कर्म्मोल्वणं, विद्या त्वस्ति जन्तोरनुल्वणा ।
वैषम्यादात्मनो धात्वोः सर्वो जन्तुर्विषीदति ॥३॥
तस्मात् कर्म्मवदेवास्य विद्याऽप्यस्तु निरावृता ।
विद्यायाः कर्म्मणः साम्यादात्माप्यस्तु समीकृतः ॥४॥
तदर्थमत्राविद्यांशं संहर्तुमुपयुज्यते ।
विज्ञानात्मकृतो विद्याबुद्धियोग इहाव्यये ॥५॥
ततः स विद्याकर्म्मभ्यां रूपाभ्यां भासते समम् ।
बुद्धियोगः साम्यहेतुरविनाभूतयोस्तयोः ॥६॥

एतदेव तु गीतायां समत्वं योग उच्यते ।
स योगो बुद्धियोगोऽयं गीतायामुपदिश्यते ॥७॥
इत्थं भगवताऽऽख्यातं गीतायां ब्रह्म कर्म्म च ।
बुद्धियोगाह्वयं कर्म्म ब्रह्म त्वव्ययमद्वयम् ॥८॥
परमात्माऽव्ययं ब्रह्म कर्म्मं तद् यदबन्धनम् ।
एतदेवोभयं गीताशास्त्रेऽपूर्वं निरूपितम् ॥९॥

**इति ब्रह्मकर्म्माभिनयस्तृतीयः प्रकाशः ।**

**३**

४

# अथ ज्ञान-क्रिया-साम्यवाद-शिक्षालक्षणश्चतुर्थः प्रकाशः

वैराग्यं ज्ञानमैश्वर्य्यं धर्म्म इत्थं चतुर्विधा ।
विद्याबुद्धिस्ततो योगो बुद्धियोगोऽव्ययात्मनि ॥१॥
रागद्वेषौ तु वैराग्यादविद्या ज्ञानतः क्षयम् ।
ऐश्वर्य्यादस्मिता चाभिनिवेशो याति धर्म्मतः ॥२॥
वैराग्याद् ज्ञानतो वायमैश्वर्य्याद् धर्म्मतोऽपि वा ।
आत्मैष दृश्यते साक्षाद् विद्याकर्म्ममयोऽव्ययः ॥३॥
आत्माऽव्ययस्तस्य धातुद्वयं संभाव्यते, तयोः ।
साम्येनान्योन्यतो वृत्तिरात्मसाम्यं विवक्ष्यते ॥४॥
चतुर्विधाद् बुद्धियोगादिदं साम्यं चतुर्विधम् ।
आत्मन्युदेत्यव्ययेऽस्मिंस्ततः संपद्यते सुखम् ॥५॥
ब्रह्म कर्म्मात्मिनो धातू स जानाति करोति च ।
जिज्ञासा वा चिकीर्षा वा यस्य रुद्धा स विह्वलः ॥६॥
**"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।"**
अवश्यं ज्ञानवान् किञ्चित् करोत्येव प्रतिक्षणम् ॥७॥
ज्ञानेन क्रियया वाऽपि हीन आत्मा पतत्यधः ।
तस्मादुभाभ्यां धातुभ्यामात्मानं समतां नयेत् ॥८॥
रजसा तमसा केचिद्दोषाः स्युर्ज्ञानकर्म्मणोः ।
आत्मविद्यां त आवृत्य तम आत्मनि कुर्वते ॥९॥
संमोहोऽभिनिवेशश्च रागद्वेषौ तथाऽस्मिता ।
चत्वार इत्यमी दोषा आत्मशक्तिनिरोधकाः ॥१०॥
निर्विद्यकर्म्मणा दोषा जायन्ते ते चतुर्विधाः ।
निवर्तन्ते च ते दोषाः सविद्येनैव कर्म्मणा ॥११॥
तस्मात् साम्यं नयेदेव कर्म्म विद्यां च यत्नतः ।
विद्याऽऽवरणनाशाय विद्याऽनावरणाय च ॥१२॥
जाते ह्यावरणे तस्य विनाशो बुद्धियोगतः ।
बुद्धियोगात् तमोनाशे ज्ञानं कर्म्म समं भवेत् ॥१३॥
तदर्थं धातुसाम्याय प्रयतेत यथावशम् ।
धातुसाम्यात् कृतात्मा हि नानुशोकाय युज्यते ॥१४॥

एकान्तस्वार्थकामाग्निर्विद्वेषाग्निपरम्परा ।
स्वेष्टचिन्ता परानिष्टचिन्ता दुर्म्मदवासना ॥१५॥
अनुशोका अविद्यायामेते तामसकर्म्मजाः ।
भवत्यबुद्धियोगस्य धात्वसाम्यस्य लक्षणम् ॥१६॥
बुद्धियोगाद्धातुसाम्ये स्वार्थप्रवणतात्ययात् ।
नानिष्टचिन्ता न द्वेषः किन्तु प्रेमोदयाच्छमः ॥१७॥
एतदर्थं स भगवान् लोककल्याणहेतवे ।
उपलक्ष्यार्जुनं शोकशान्त्युपायमुपादिशत् ॥१८॥
नैते रजस्तमोदोषा नश्यन्त्येकान्ततः क्वचित् ।
स्वबुद्धिं तु तथा कुर्य्याद् यथा शोको न संभवेत् ॥१९॥
बुद्धियोगाद् धातुसाम्ये स आत्मा सुदृढः स्थिरः ।
तादृक्प्रभावो भवति येन शोको न सर्पति ॥२०॥
बालो व्याकुलतामेति भृशं तुच्छेऽपि कारणे ।
प्रौढस्तु धीरो विज्ञाता सहसा न विषीदति ॥२१॥
एवमेव विजानीयाद् बुद्धियोगात् कृतात्मनि ।
स्थिरबुद्धावसंमूढे न विषादोऽनुसर्पति ॥२२॥
स यथा स्थितधीरात्मा विषादैर्नोपहन्यते ।
तथा बुद्धौ साम्यवादो गीतायामुपदिश्यते ॥२३॥

## बुद्धियोगेन ब्रह्म-कर्मणोरात्मधात्वोः साम्यवादोपदेशे गीतातात्पर्य्यम्

बुद्धियोगात् साम्यसिद्धौ गीतातात्पर्य्यमिष्यते ।
मानसानां विचाराणां सा चैकरसतः स्थितिः ॥२४॥
प्रवर्तयति साम्येन मस्तिष्कपटली तुला ।
समस्था मानसान् भावान्, साम्यं शान्तिसुखायतत् ॥२५॥
संज्ञया चेष्टया वापि मस्तिष्कपटली तुला ।
विक्षुब्धा याति वैषम्यं दुःखाय तदशान्तये ॥२६॥

## साम्यवादः पञ्चविधः

अनासक्तिरकामत्वं यज्ञार्थं चेश्वरार्पणम् ।
जीवेश्वरैकात्म्यकृतमिति साम्यं तु पञ्चधा ॥२७॥
स पञ्चधा साम्यवादो गीतायामुपदिश्यते ।
१ **अनासक्तिकृतं** कर्म्म, २ **निष्कामकृत**कर्म्म, च ॥२८॥
३ **यज्ञार्थप्रचितं** कर्म्म, ४ **चेश्वरार्पित**कर्म्म, च ।
५ **आत्मज्ञानमयं** कर्म्म, सर्वं चैतदबन्धनम् ॥२९॥
केचिच्छ्लोका उदाहार्य्याः साम्यवादनिबन्धनाः ।
तत्र तावदनासक्त्या साम्यवादः प्रदर्श्यते ॥३०॥

## १—अनासक्तिसाम्यवादोपदेशे गीताश्लोकाः (११)

**"अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः ।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥६।१॥**

तस्मादसक्तः सततं कार्य्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥३।१९॥
यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥३।७॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥२।३८॥
योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥२।४८॥
यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥२।१५॥
न द्वेष्ट्यकुशलं कर्म्म कुशले नानुषज्जते ॥१८।१०॥
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१२।१५॥
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ॥
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥१४।२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥१४।२५॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्" ॥१८।६॥

## २—निष्कामसम्यवादोपदेशे गीताश्लोकाः (७)

अनासक्त्या यथा तद्वन्निष्कामकरणाय च ।
कर्तव्यबुद्धचा तत्कर्त्तुं कर्तव्यमुपदिश्यते ॥१॥
"कार्य्यमित्येव यत् कर्म्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥१८।९॥
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥१७।१०॥
कर्म्मण्येवाऽधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ॥२।४७॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमान् लोकान् न हन्ति न निबध्यते ॥१८।१७॥
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥१८।२६॥
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥३।४१॥
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥३।४३॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ॥
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥१८।६॥

## ३—यज्ञार्थसाम्यवादोपदेशे गीताश्लोकप्रदर्शनम् (११)

आत्मनि क्रियते यद्यत् स यज्ञः स पुनर्दिवि ।
देवेभ्यो हूयतेऽथैष ईश्वरे स पुनर्मयि ॥१॥

इत्थं कर्म्माखिलं यज्ञः स्वयमेवोपपद्यते ।
अन्तरात्मा नियुञ्जानो यजते कोऽस्म्यहं पृथक् ॥२॥
इत्थमस्य दृढा दृष्टिर्यज्ञमात्मानमीक्षते ।
तस्य यज्ञात् परं नास्ति स कुर्वन्नानुलिप्यते ॥३॥
आसक्तिस्तस्य कामो वा जायतेऽपि न जायते ।
तस्मान्न कर्म्म बध्नाति तथाह भगवान् स्वयम् ॥४॥
**"यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।**
**तदर्थं कर्म्म कौन्तेय मुक्तसङ्गः समाचर ॥३।९॥**
**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते ॥४।२३॥**
**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म्मसमाधिना ॥४।२४॥**
**दैवमेवापरे यज्ञं योगिनः पर्य्युपासते ।**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥४।२५॥**
**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।**
**शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥४।२६॥**
**सर्वाणीन्द्रियकर्म्माणि प्राणकर्म्माणि चापरे ।**
**आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥४।२७॥**
**द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।**
**स्वाध्याययज्ञानयज्ञाश्च यतयः संशितव्रताः ॥४।२८॥**
**अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।**
**प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥४।२९॥**
**अपरे नियताहारा प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥४।३०॥**
**यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।**
**नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥४।३१॥**
**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।**
**कर्म्मजान् विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥४।३२॥"**

## ४—ईश्वरार्पणसाम्यवादश्चतुर्थः

ईशावास्यमिदं सर्वं यत् किञ्चिज्जगतीगतम् ।
सर्वत्र व्याप्नुवानस्य व्याप्तिर्जीवेऽप्यवारिता ॥१॥
**"यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥"**
**"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥"**
ईश्वराज्जीवमायाति जीवादीश्वरमेति च ।
शश्वद्विनिमयैकान्त्यान्न जीवः पृथगीश्वरात् ॥२॥
ईश्वरादुद्भवन्तस्ते प्रतितिष्ठन्ति हीश्वरे ।
ईश्वरे प्रविलीयन्ते नान्यो जीवः स ईश्वरात् ॥३॥

यद्यदाचेष्टते जीवस्तत्तदीश्वरचेष्टितम् ।
ज्ञानतोऽज्ञानतो यद्यत् तत्तदर्पितमीश्वरे ॥४॥
व्यामोहमात्रं जीवोऽहं नाहमस्मीश्वरात् पृथक् ।
समुद्रादुद्धृतो विन्दुः समुद्रे प्रविलीयते ॥५॥
ईश्वरेण कृतं कर्म्मं प्रतितिष्ठति चेश्वरे ।
विपाकश्चेश्वरे तेषां कर्त्ता भोक्ता स ईश्वरः ॥६॥
विपाकाः कर्म्मणां त्रेधा जात्यायुर्भोगलक्षणाः ।
न विरुन्धन्ति सन्तोऽपि स्वप्रकृत्येच्छया कृताः ॥७॥
इत्थं पश्यन्ति ये सन्तस्तेषामीश्वरतः पृथक् ।
सत्ता नास्तीश्वरस्यैव सत्तया भान्ति ते पृथक् ॥८॥
कुर्वन्तोऽपि न कुर्वन्ति लिप्यन्ते ते न कर्म्मभिः ।
न च कर्म्माणि बध्नन्ति मुक्तमीश्वरवत्क्रियम् ॥९॥
एकमेवेश्वरं साम्यात् सर्वत्र समवस्थितम् ।
पश्यतां समबुद्धिर्य्या शान्ति यान्ति परां ततः ॥१०॥
अभ्यासेन क्रमादेषा समबुद्धिर्विधीयते ।
तथा च भगवानेतां समबुद्धि प्रशंसति ॥११॥
**"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥९।२९॥**
**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥९।२७॥**
**शुभाशुभफलैरेवं मोक्ष्यसे कर्म्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥९।२८॥**
**मयि सर्वाणि कर्म्माणि संन्यस्याध्यात्मचेतसा ॥३।३०॥**
**मदर्थमपि कर्म्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१२।१०॥**
**यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।**
**स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥१८।४६॥**

## ५—अथ जीवात्मसाम्यवादः पञ्चमः

यस्तु पश्यति विश्वस्य क्षरात्मानं परायणम् ।
नाक्षरादधिकं वा यः पश्यत्यस्य परां गतिम् ॥१॥
तस्य तस्य च नैकास्ति विश्वस्यास्य परा गतिः ।
अव्ययं त्वेकमात्मानं यः पश्यति स पश्यति ॥२॥
नाव्ययादुत्तरं किञ्चित् तेन सर्वमिदं ततम् ।
यच्चैतत् कारणं कार्य्यं तत्सर्वमिदमव्ययम् ॥३॥
प्रविविक्तं च यद् ब्रह्म, प्रविष्टं, सृष्टमेव वा ।
तदेकमव्ययं ब्रह्म त्रिधा भूत्वा विजृम्भते ॥४॥
विश्वातीतं च, विश्वात्मा, विश्वं चैतन्न भिद्यते ।
त्रिधाऽप्यमेक एवार्थस्तमव्ययमुपास्महे ॥५॥

विश्वात्मानं द्विधा प्राहुर्जीवेश्वरविभेदतः ।
एक एवेश्वरस्तत्र नाना जीवास्तदंशतः ॥६॥
ते वा जीवाव्ययाः सर्वेऽप्येक एवेश्वराव्ययः ।
तस्माज्जीवाव्ययान् सर्वानेकत्वेन विभावयेत् ॥७॥
सुहृन्-मित्रार्य्युदासीन-मध्यस्थ-द्वेष्य-बन्धुषु ।
साधुष्वपि च पापेषु नायमात्मा विशिष्यते ॥८॥
तदित्थमात्मैकत्वेन समदृष्टिर्विधीयते ।
स उक्तः साम्यवादोऽयमात्मैकत्वनिबन्धनः ॥९॥

**'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ' ॥(७।१९)**
**'ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति' ॥(१५।७)**
**'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' ॥(५।१८)**
**'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।**
**निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः' ॥(५।१९)**
**'न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः' ॥(५।२०)**
**'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।**
**ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः' ॥(६।२९)**
**'आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।**
**सुखं वा यदि वा दुःखं स योगी परमो मतः' ॥(६।३२)**
**'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति' ॥(१३।२७)**
**'समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम्' ॥(१३।२८)**
**'यदा भूतपृथग्भावमेकस्थमनुपश्यति ।**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा' ॥(१३।३०)**
**'अनादित्वान्निर्गुणत्वात् परमात्मायमव्ययः ।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' ॥(१३।३१)**
**'सर्वभुतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्' ॥(१८।२०)**
**'अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च' ॥(१३।१६)**

### अथ साम्यवादनिष्कर्षः

तदित्थं साम्यवादोऽयं पञ्चधा परिदर्शितः ।
अपि पञ्चविधा एव तत्रोक्ताः साम्यवादिनः ॥१॥

**स्थितप्रज्ञश्च युक्तश्च कर्म्मी भक्तो गुणातिगः ।**
भक्त एव **प्रपन्नश्च गुणातीतो** गुणातिगः ॥२॥
बुद्धियोगवशादेते पञ्चापि समदर्शिनः ।
भवन्ति सुखिनो विद्याकर्म्मसाम्यात्तु योगिनः ॥३॥
अनासक्तं च निष्कामं भगवत्संमतं द्वयम् ।
उक्तं प्रथमविद्यायां तेन साम्यं चतुर्विधम् ॥४॥
अनासक्ते च निष्कामे साम्यवादेषु पञ्चसु ।
विशेषतः स भगवान् दर्शयत्यात्मसंमतिम् ॥५॥
**"एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥(१८।६)**
**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥(३।३१)**
**येत्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।**
**सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः" ॥(३।३२)**
संन्यासिनो ज्ञानयोगनिष्ठाः सांख्या न ते समाः ।
आरम्भिणः कर्म्मयोगनिष्ठास्ते योगिनोऽसमाः ॥६॥
आसक्तः कामकामी यः स योगी क्लेशमश्नुते ।
सर्वकर्म्मपरित्यागी संन्यासी क्लेशमश्नुते ॥७॥
कर्म्माण्यारभते यो हि सङ्गं त्यक्त्वा फलानि च ।
स संन्यासी च योगी च स शान्तिसुखमश्नुते ॥८॥
**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥(१८।६१)**
**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥(१८।६२)**
**चेतसा सर्वकर्म्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥(१८।५७)**
**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥(९।३४) (१८।६५)**
**सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः" ॥(१८।६६)**

---

तदित्थं साम्यवादस्योपदेशेषु च सप्तसु ।
भवन्ति पञ्चपञ्चाशच्छ्लोका इति विमृश्यताम् ॥१॥
अनासक्तौ च निष्कामे यज्ञार्थे चेश्वरार्पणे ।
आत्मैकत्वे च निष्कर्षद्वये श्लोकाः स्थिताः क्रमात् ॥२॥
एकादश ततः सप्त चैकादश च पञ्च च ।
त्रयोदश त्रयः पञ्च साम्यमेषूपदिश्यते ॥३॥

## साम्यवादोपदेशेषु श्लोकाः

| | | |
|---|---|---|
| १ | अनासक्तिसाम्यवादे—— | ११ |
| २ | निष्कामसाम्यवादे—— | ७ |
| ३ | यज्ञार्थसाम्यवादे—— | ११ |
| ४ | ईश्वरार्पणसाम्यवादे—— | ५ |
| ५ | जीवात्मैकत्वसाम्यवादे—— | १३ |
| ६ | साम्यवादनिष्कर्षे—— | ३ |
| ७ | सर्वनिष्कर्षे—— | ५ |
| | | ५५ |

**इति बुद्धियोगे साम्यवादोपदेशाख्यानं चतुर्थः प्रकाशः ।।४।।**

**४**

५

# संक्षिप्तगीतायाम्

## लक्ष्यगीता पञ्चमः प्रकाशः

### अथ गीतायां योगशास्त्रे योगचतुष्टयी लक्ष्यगीता पृथग् विविच्यते

अथातो लक्ष्यगीताऽस्यां गीतायां विनिगूहिता ।
गीतारहस्यमेतस्यां लक्ष्यते परिशीलनात् ॥
भक्ति–कर्म्म–ज्ञान–बुद्धि–योगेषु मतयः पृथक् ।
लक्ष्यन्ते रुचिवैचित्र्यात् तत्र बुद्धिर्विधीयताम् ॥

### १—भक्तियोगोपदेशो गीताविषय-इति मतमुपासकानामीश्वरभक्तानाम्

पश्यन्ति विषयानस्यां गीतायां बहुधा बुधाः ।
तेषां दृष्टिविभागेन कांश्चिच्छ्लोकानुदीरते ॥१॥
अध्याय षट्कैरत्राहु र्ज्ञानं भक्तिं च कर्म्म च ।
परे तूपासकाः प्राहुर्न मुख्ये ज्ञान-कर्म्मणी ॥२॥
ईश्वरप्राप्त्युपायस्तु तत्र भक्तिरुपासना ।
सा भक्तिरुक्ता गीतायां तदर्थे ज्ञान-कर्म्मणी ॥३॥
प्रथमेऽध्यायषट्के तु ज्ञानं कर्म्म तथोदितम् ।
यथेश्वरात्मनो रूपं विज्ञातं भक्तये भवेत् ॥४॥
मध्यमेऽध्यायषट्के तु ज्ञानं कर्म्म तथोदितम् ।
यथा जीवात्मनो रूपं विज्ञातं भक्तये भवेत् ॥५॥
तृतीयेऽध्यायषट्के तु परिशिष्टं प्रदर्शितम् ।
विश्वजन्म तथा रूपं भक्तेर्ज्ञानस्य कर्म्मणः ॥६॥
भक्तिरेव हि गीताया मुख्यो विषय इष्यते ।
भगवान् भक्तिमेवास्यां कर्त्तुं भूयः प्रशंसति ॥७॥
तथा हि—
**"योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ (६।४७)॥**
**येषां त्वन्तगतं पापं जनानां पुण्यकर्म्मणाम् ।**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ (७।२९)**

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ (९।२२)
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ (९।२६)
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ (९।२७)
ये भजन्ति तु मां भक्त्या मयिते, तेषु चाप्यहम् । (९।२९)
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ (९।३१)
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥ (९।३०)
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् । (९।३३)
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ (९।३४)
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ (१०।८)
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ (१०।९)
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ (१०।१०)
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ (१२।१४)
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः । (१२।१६)
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ (१२।१७)
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केन चित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ (१२।१९)
ये तु धर्म्यामृतमिदं यथोक्तं पर्य्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ (१२।२०)
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् । (१८।५४)
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ॥ (१८।५५)
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ (१८।६५)
सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ (१८।६६)
य इदं परमं गुह्यं यद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ (१८।६८)
न च तस्मान्मनुष्येषु कश्चिन् मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ (१८।६९)

इति गीताशास्त्ररहस्ये भक्तिगीताप्रकाशः ॥१॥

## २—कर्मयोगोपदेशो गीताविषय इति मतं योगिनां कर्मनिष्ठानाम्

कर्म्मैव केचिदिच्छन्ति गीताया विषयं परम् ।
न विना कर्म्मणा भक्तिर्न ज्ञानं कर्म्मणा विना ॥१॥
अष्टावात्मगुणाः शौचमनायासः प्रवृत्तिषु ।
दयाऽनसूया रक्षा च क्षमाऽकार्पण्यमस्पृहा ॥२॥
अष्टौ गुणाः क्रियायोगो ज्ञानयोगस्य साधकः ।
कर्म्मयोगं विना ज्ञानं कस्यचिन्नेह दृश्यते ॥३॥
कर्म्मण्येवार्जुनं संख्ये योक्तुं गीतामिमां पुरा ।
उवाच भगवाँस्तत्र कर्म्मनिष्ठोपदिश्यते ॥४॥
तथा हि—

**नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्म्मणः ॥(३।८)**
**तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म्म कर्तुमिहार्हसि ॥(३।१९)**
**कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः ।(३।२०)**
**न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥(३।४)**
**काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः ।**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा ॥(४।१२)**
**एवं ज्ञात्वा कृतं कर्म्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्म्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥(४।१५)**
**कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्म्मणः ।**
**अकर्म्मणश्च बोद्धव्यं गहना कर्म्मणो गतिः ॥(४।१७)**
**स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥(१८।४५)**
**सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत् ।(१८।४८)**
**स्वभावनियतं कर्म्म कुर्वन्नाप्नोति किल्विषम् ॥(१८।४७)**
**सर्वकर्म्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्" ॥(१८।५६)**

इति शास्त्ररहस्ये कर्म्मगीताप्रकाशः ॥२॥

## ३—ज्ञानयोगोपदेशो गीताविषय इति मतं सांख्यानां कर्मसंन्यासिनाम्

ज्ञानमेवापरे प्राहुर्गीताया विषयं परम् ।
न ज्ञानेन विना कर्म्म कृतं किमपि सिद्धयति ॥१॥
ज्ञानजन्या भवेदिच्छा इच्छाजन्यः क्रतुर्भवेत् ।
क्रतुजन्यं भवेत्कर्म्म ज्ञानात्माऽनिन्द्रियेष्वपि ॥
जानीयाद् विश्वमत्यन्तं जानीयादात्मनो गतिम् ।
**"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥(४।३८)**
सिद्धिः पारत्रिकी ज्ञानादात्मनो मुक्तिलक्षणा ।
इह विज्ञानतः सिद्धिरात्मनो भुक्तिलक्षणा ॥२॥

ज्ञानात् सिद्ध्यन्ति कर्म्माणि ज्ञानमेव परं बलम् ।
ज्ञानमेवात्मनो रूपं ज्ञाने विश्वं प्रतिष्ठितम् ॥३॥
ज्ञात्वा कर्म्माणि कुर्वीत नाज्ञात्वा किञ्चिदाचरेत् ।
अज्ञानेन प्रवृत्तानां स्खलनं स्यात् पदे पदे ॥४॥
उपक्रमोपसंहारौ ग्रन्थतात्पर्य्यमाहतुः ।
ज्ञानप्रतिज्ञयाऽऽरभ्य ज्ञानेनान्ते निवर्तते ॥५॥
तथा हि—

**"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥(७।२)**
**श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥(४।३९)**
**सर्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ।(४।३३)**
**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ।(४।३४)**
**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ॥(४।३५)**
**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥(१३।११)**
**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥(५।१६)**
**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।(७।१८)**
**तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥**
**प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥(७।१७)**
**बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।(७।१९)**
**परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥(१४।१)**
**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥(२।४५)**
**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥(५।२९)**
**तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥(५।१७)**
**अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।**
**सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥(४।३६)**
**यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा ॥(४।३७)**
**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत् स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥(४।३८)**
**योगसंन्यस्तकर्म्माणं ज्ञानसंच्छिन्नसंशयम् ।**
**आत्मवन्तं न कर्म्माणि निबध्नन्ति धनञ्जय ! ॥(४।४१)**

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानाऽसिनात्मनः ।**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ! ॥(४।४२)**
**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु" ॥(१८।६९) । इति ।**
यत्तु भक्तिप्रकरणं गीतायां किञ्चिदस्ति तत् ।
ज्ञानोपसर्जनं विद्यादिति तत्रोपदिश्यते ॥१९॥
**"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" ।(१३।१०)**
**"एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" ॥(१३।११)**
प्राक् तु ज्ञानोदयात्कर्म्म श्रिये, ज्ञानोदये त्विदम् ।
'सर्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते' ॥२०॥
**"यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन ।**
**ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुते तथा" ॥(४।३७)**
ज्ञानं चैकान्ततः कर्म्मानपेक्षं नेष्यते क्वचित् ।
ज्ञानार्थं कर्म्म कुर्वीत ज्ञाने कर्म्म समाप्यते ॥२१॥

इतिशास्त्ररहस्ये ज्ञानगीताप्रकाशः ॥३॥

## ४—बुद्धियोगोपदेशो गीताविषय इति सिद्धान्तो भागवतानाम्

परे त्वाहुः स भगवान् कथं विप्रवदेत् स्वयम् ।
ज्ञाने कर्म्मणि, भक्तौ वा कथं ब्रूयाद् विरुद्धवत् ॥१॥
तस्मान्न केवलां भक्तिं न ज्ञानं कर्म्म केवलम् ।
विरोधेन विधत्तेऽसौ व्यवस्थां त्वेष इच्छति ॥२॥
ज्ञानेन वा कर्म्मणा वा भक्त्या वा सुप्रयुक्तया ।
अविद्याबुद्धिमुत्सार्य्य विद्याबुद्धिं प्रवर्तयेत् ॥३॥
कर्म्मयोगो ज्ञानयोगो निःश्रेयसकरावुभौ ।
कर्मैव ज्ञानयोगोऽपि कर्म्मयोगान्न भिद्यते ॥४॥
त्रैगुण्यविषयं कर्म्म निस्त्रैगुण्याय कर्म्म च ।
समं नियुञ्जते वेदा इत्याह भगवान् मनुः ॥५॥
तथा हि—
**"सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।**
**प्रवृत्तं च निवृत्तं च द्विविधं कर्म्म वैदिकम् ॥**
**इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्यते ।**
**निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥**
**प्रवृत्तं कर्म्म संसेव्य देवानामेति साम्यताम् ।**
**निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै" ॥(मनुः)**
प्रवृत्तं नाम यत्कर्म्म कर्म्मयोगः स उच्यते ।
निवृत्तं कर्म्म तु ज्ञानयोग इत्यवधार्यताम् ॥६॥
ज्ञानयोगानपेक्षस्तु कर्म्मयोगः स नेष्यते ।
कामासक्तिनिवृत्तिस्तु कर्म्मणो ज्ञानयोगिता ॥७॥

कर्म्मयोगानपेक्षो वा ज्ञानयोगोऽपि नेष्यते ।
न ज्ञानयोगः संन्यासोऽस्त्यविशेषेण कर्म्मणाम् ॥८॥
ज्ञानाय कर्म्मसंन्यासं य इच्छन्त्यबुधा हि ते ।
न शक्यः कर्म्मसंन्यासो ममाऽऽत्मा ज्ञानकर्म्मणी ॥९॥
सदोषमपि कर्म्म स्वं न त्याज्यं कार्य्यमेव तत् ।
विकर्म्माकर्म्म तु त्याज्यं संन्यासः काम्यकर्म्मणाम् ॥१०॥
इष्टं पूर्तं च दत्तं च विद्यया निरपेक्षितम् ।
यज्ञो दानं तपः कर्म्म विद्ययाऽस्ति समुच्चितम् ॥११॥
तन्नित्यं कर्म्म कुर्वीत विद्यया यत् समुच्चितम् ।
निर्विद्यमपि सत्कर्म्म शास्त्रोक्तं कार्यमेव तत् ॥१२॥
इष्टं पूर्त्तं च दत्तं च पितृस्वर्गाय कल्पते ।
यज्ञो दानं तपः कर्म्म दिव्यस्वर्गसुखावहम् ॥१३॥
निष्काममेतदुभयं निःश्रेयसकरं परम् ।
अथाऽऽनन्त्यं परा मुक्तिर्निवृत्तं कर्म्म कुर्वतः ॥१४॥
आत्मावरणमज्ञानं ज्ञानयोगान्निवर्तते ।
ज्ञानयोगात् परा मुक्तिरपरा भक्तियोगतः ॥१५॥
लौकिकाभ्युदयं हीच्छन् कर्मयोगे प्रवर्तताम् ।
ईश्वरानुग्रहात् सिद्धिमिच्छतो भक्तियोगिता ॥१६॥
भक्तियोगे कर्म्मयोगे ज्ञानयोगेऽपि वा समम् ।
बुद्धियोगमुपाश्रित्य तिष्ठेद् ब्रह्मणि कर्म्मणि ॥१७॥
आरम्भः कर्म्मणां किन्तु संन्यासः कामसङ्गयोः ।
स बुद्धियोगो गीतायां निष्ठाद्वयसमुच्चयः ॥१८॥
वैराग्यं ज्ञानमैश्वर्य्यं धर्म्मं इत्यात्मबुद्धयः ।
चतुर्विधाः स्थितास्तासां योगः स्यादव्ययात्मनि ॥१९॥
बुद्धियोगेऽस्य तात्पर्य्यं परं भगवतः स्थितम् ।
विशिष्य बुद्धियोगोऽयं गीतायामुपदिश्यते ॥२०॥

**(१) "एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।**
**बुद्ध्या युक्तो यया पार्थ कर्म्मबन्धं प्रहास्यसि ॥ (२।३९)**
**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।**
**स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात् ॥" (२।४०)**

**(२) "चेतसा सर्वकर्म्माणि मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ (१८।५७)**
**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।**
**न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ (६।२)**
**यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते ।**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥" (६।५४)**

**(३) "सांख्ययोगौ पृथग् बालाः प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥" (५।४)**

यत् सांख्यैः प्राप्यते स्थानं तद् योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥" (५।५)

(४) "योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥(५।७)
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥(५।११)
युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥(५।१२)
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥(५।२१)
योन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥(५।२४)
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥(५।२६)

(५) "कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ॥(२।४७)
योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय !
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥(२।४८)
दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥(२।४९)
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद् योगाय युज्यस्व योगः कर्म्मसु कौशलम् ॥(२।५०)
कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धनविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥(२।५१)
तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥(३।१९)
सक्ताः कर्म्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्य्याद् विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥(३।२५)
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥(६।८)
सुहृन्मित्रार्य्युदासीन-मध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥(६।९)
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥(६।२२)
तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ॥(६।२३)
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥(६।२९)
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥(६।३०)

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥(६।३१)**
**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।**
**कर्म्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुन ॥"(६।४६)**

इत्थं भगवताऽपूर्वो बुद्धियोगः प्रवर्तितः ।
तस्योपसर्जनत्वेन वर्णिते ज्ञान-कर्म्मणी ॥२१॥
गीताचतुष्टयी चेयं वक्ति योगचतुष्टयीम् ।
सा लक्ष्यगीता तत्रास्ति बुद्धियोगे परा स्थितिः ॥२२॥
कर्म्मयोग इदं विश्वं भक्तियोगोऽमुमीश्वरम् ।
ज्ञानयोगः स्वमात्मानं स्पृत्वाऽऽराधयते पृथक् ॥२३॥
बुद्धियोगवशात् त्वात्मा शक्तिमाप्नोति सर्वतः ।
विश्वं तत्रेश्वरं तत्र चात्मानं सममश्नुते ॥२४॥
विश्वस्याभ्युदयो धर्म्मादैश्वर्य्यादीश्वरेऽन्वयः ।
आत्मा प्रसीदति ज्ञानाद् वैराग्याद् बन्धनिग्रहः ॥२५॥
इत्थं योगा इमे सर्वे सन्ति श्रेयस्कराः पृथक् ।
अन्यान्यविषये सिद्धिस्तेषामेकैकतो भवेत् ॥२६॥
तस्मात् स योगान् भगवान् सर्वान् सह विबोधयन् ।
न्यूनाधिकफलेष्वेषु कामचारमुपादिशत् ॥२७॥

**"इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥"(१८।६३)**

| | योगशास्त्रे | योगविद्योपदेशे | श्लोकाः |
|---|---|---|---|
| १ | भक्तिगीतायां | भक्तियोगोपदेशे | २० |
| २ | कर्म्मगीतायां | कर्म्मयोगोपदेशे | ९ |
| ३ | ज्ञानगीतायां | ज्ञानयोगोपदेशे | १९ |
| ४ | बुद्धिगीतायां | बुद्धियोगोपदेशे | २७ |
| | | | ७५ |

**इति गीताशास्त्ररहस्ये गीताचतुष्टयीविभक्ता लक्ष्यगीता पञ्चमः प्रकाशः ॥५॥**

५

## संक्षिप्तगीतायाम्

# गीतासप्ततिः षष्ठः प्रकाशः

भारतवर्षस्यार्य्यद्वीपस्यैतस्य सन्त्युपद्वीपाः ।
नव, तेषु कश्चिदेको बालिद्वीपोऽग्निकोणेऽस्ति ॥१॥
अत्र हि भारतशास्त्रं निवसत्स्वार्य्येषु दृश्यते प्रथितम् ।
तत्र च गीतासारः संप्रथते श्लोकसप्तत्या ॥२॥
एतावतीव पूर्वं गीताऽऽसीदिति हि तत्र जनतायाम् ।
अस्ति परो विश्वासः श्रुतमिति खलु मे जनश्रुत्या ॥३॥
एतच्च श्रद्धेयं नातीवास्तीति मन्महे हन्त ।
क्रमसन्दर्भः सम्यग् नास्ति यतः श्लोकसप्तत्याम् ॥४॥
मन्ये केचन पश्चादनतिप्रज्ञेन संकलिताः ।
श्लोका इमे स्वबुद्ध्या संक्षेपात् सर्वबोधाय ॥५॥
एवमपीयं गीता यथास्ति जनतान्तरे प्रथिता ।
संक्षिप्तात्मा सेयं प्रदर्श्यते तद्विवेकाय ॥६॥

## संक्षिप्तभगवद्गीतासारः

### अर्जुन उवाच

दृष्ट्वेमं स्वजनं कृष्ण ! युयुत्सुं समुपस्थितम् ॥१।२८॥
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥१।३२॥
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥१।४६॥

### श्रीकृष्ण उवाच

क्लैव्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥२।३॥
अशोच्यानन्वशोचस्त्वं प्रज्ञावादाँश्च भाषसे ।
गतासूनगतासूँश्च नानुशोचन्ति पण्डिताः ॥२।११॥

## जीवात्मनो नित्याविनाशित्वम्

१ देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥२।१३॥

२ नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः ।।२।१६।।
३ अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद् युद्धचस्व भारत ! ।।२।१८।।
४ य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ।।२।१९।।

### युद्धधर्म्मिणः क्षत्रियस्य युद्धविमुखत्वायोग्यत्वम्

५ स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ।।२।३१।।
६ हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय ! युद्धाय कृतनिश्चयः ।।२।३७।।

### बुद्धियोगनिष्ठाया उपादेयत्वम्

७ कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ।।२।४७।।
८ योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय !
सिद्धचसिद्धचोः समो भूत्वा समत्वं योग उच्यते ।।२।४८।।
९ श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।।२।५३।।
१० प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।।२।५५।।
११ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ।।२।५६।।
१२ विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।।२।५९।।
१३ या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ।।२।६९।।

### यज्ञार्थकर्म्मोपादेयत्वम्

१४ देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ।।३।११।।
१५ यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।।३।१३।।

### स्वधर्म्मस्य नित्योपादेयत्वम्

१६ श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ।।३।३५।।

### आधिकारिकपुरुषस्य स्वेच्छाकृतजन्मबहुत्वेपि कर्मणो बन्धकत्वाभावः

१७ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन !
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ! ४।५।।

१८ यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥४।७॥
१९ परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्म्मसंस्थापनार्थाय संभवामि युगे युगे ॥४।८॥
२० जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥४।९॥
२१ न मां कर्म्माणि लिम्पन्ति न मे कर्म्मफले स्पृहा ।
इति मां योऽभिजानाति कर्म्मभिर्न स बध्यते ॥४।१४॥
२२ कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत् ॥४।१८॥
२३ यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥४।२२॥
२४ द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥४।२८॥
२५ सर्वं कर्म्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥४।३३॥
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ॥४।३४॥
२६ संन्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्म्मसंन्यासात् कर्म्मयोगो विशिष्यते ॥५।२॥
२७ योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥५।६॥
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥५।७॥

### सर्वत्रात्मधारणा-योगाभ्यासः

२८ आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
उद्धरेदात्मनाऽऽत्मानं नात्मानमवसादयेत् ॥६।५॥
२९ योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥६।१०॥
३० समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥६।१३॥
३१ यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥६।१९॥
३२ आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥६।३२॥
३३ यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥६।३०॥

### प्रकृतिपुरुषव्यापकतानिर्देशः

३४ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥७।४॥
३५ एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥७।६॥

३६ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७।७॥

### पुरुषव्याप्तियोगः

३७ रसोऽहमप्सु कौन्तेय ! प्रभास्मि शशिसूर्य्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥७।८॥
३८ पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥७।९॥
३९ बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥७।१०॥
बलं बलवतां चाहं कामरागविवर्जितम् ॥७।११॥

### ईश्वरप्रतिपत्तियोगः

४० चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥७।१६॥
४१ बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥७।१९॥
४२ जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाखिलम् ॥७।२९॥
४३ अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥८।५॥
४४ तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मर्य्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥८।७॥
४५ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥८।१२॥

### ईश्वरविभूतयः

४६ इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥९।१॥
४७ अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥९।१६॥
४८ वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च ॥९।१७॥
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥
४९ मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥१०।२१॥
रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
५० वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥१०।२३॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥१०।२६॥
५१ उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणाञ्च नराधिपम् ॥१०।२७॥
५२ आयुधानामहं वज्रं सर्पाणामस्मि वासुकिः ॥१०।२८॥
अनन्तश्चामि नागानां यमः संयमतामहम् ॥१०।२९॥

५३ प्रह्लादः सर्वदैत्यानां कालः कलयतामहम् ।
मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ।।१०।३०।।

...............................

५४ अक्षराणामकारोऽस्मि रामः शस्त्रभृतामहम् ।।१०।३३।।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ।।१०।३५।।

५५ वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशनाकविः ।।१०।३७।।

५६ न तदस्ति विना यत् स्यान् मया भूतं चराचरम् ।।१०।३९।।
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।।१०।४०।।

## ईश्वरविश्वरूपदर्शनम्

५७ पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ।।११।५।।

५८ न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।।११।८।।

**अर्जुन उवाच**

५९ अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ।।११।१०।।

६० यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ।।११।२८।।

६१ यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ।।११।२९।।

६२ आख्याहि मे को भवानुग्ररूपो (११।३१) लोकान् समाहर्तुमिह प्रवृत्तः । (११।३२)
नमो नमस्तेऽस्तु सहस्रकृत्वः (११।३९) नमः पुरस्तादथ पृष्ठतस्ते ।। (११।४०)

**श्रीकृष्ण उवाच**

६३ नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।।११।५३।।

६४ मत्कर्म्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ! ११।५५।।

## क्षेत्रज्ञजीवात्मस्वरूपम्

६५ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ।।१३।३२।।

६६ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ।।१३।३३।।

## गुणातीतस्य ब्रह्मभावः

६७ सत्त्वं सुखे सञ्जयति रजः कर्म्मणि भारत !
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ।।१४।९।।

६८ ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥१४।१८॥
६९ समदुःखसुखः स्वस्थः समलोष्ठाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥१४।२४॥
७० मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥१४।२५॥
७१ मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥१४।२६॥

## ईश्वरप्रपन्नस्य सर्वशोकनिवृत्तिः

७२ सर्वधर्म्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥१८।६६॥

इति द्वीपान्तरोपलब्धा गीतासप्ततिः समाप्ता ॥

**इति गीताशास्त्ररहस्यं समाप्तम् ।**

# अथ गीताविषयरहस्यम्

## तत्रादौ आत्मनिर्वचने–

### आत्मदर्शनसमीक्षा ।

**[ दर्शनशास्त्रसमालोचना ]**

**न ब्रह्मवैज्ञानिकबोधमन्तरा गीतारहस्यं प्रतिभाति कर्हिचित् ।**
**तस्मात्पृथक् तावदिदं निरूप्यते निगूढगीताहृदयं समासतः ॥१॥**

इदं तावदपूर्वार्थोपदेशकं भगवद्गीताशास्त्रं विज्ञानशास्त्रमपि सद्दर्शनशास्त्राणां कात्स्न्र्यं संपादयतीत्युच्यते । तथा हि—

अस्ति खलु सर्वसाधारणविश्वविद्यायाः पर्वत्रयम्—सम्यग्दर्शनं, सम्यग्ज्ञानं, सम्यक् चारित्र्यं चेति । दृष्टस्यार्थस्य प्रथमतः सिद्धान्तमात्रेण परेभ्यः प्रदर्शनं "दर्शनम्" । तत्र चान्येन दृष्टस्यार्थस्य श्रवणेनापाततोऽवग्रहलक्षणदर्शनतुल्यं सामान्यज्ञानमात्रं सिद्धं भवति, न तु श्रोतुस्तत्र स्वयं साक्षात्काराय किञ्चित् कर्तव्यमुपपद्यते । तदिदं दर्शनं विश्वविद्यायाः प्रथमं पर्व ॥१॥

*तत्र चावग्रहेहावगमधारणात्मके ज्ञानपर्वचतुष्टयेऽवग्रहमात्रं निष्पद्यते । न त्ववगमपर्य्यन्तं पूर्णज्ञानं विज्ञानं भवति, नाप्यभिनिवेशो नाम धारणा भवति, प्रत्यक्षमूलकस्यात्मगोहस्त्यश्वादिपरिचयरूपस्याभिनिवेशज्ञानस्य प्रत्यक्षीकारमन्तरेण दुरापत्वात् । गौतमस्तु भगवान् धर्म्मस्मृतौ ज्ञानाभिनिवेशाभ्यामर्थसिद्धिमाह । तस्मादभिनिवेशोपपत्तये सामान्यतो ज्ञातानामर्थानां प्रत्यक्षीकाराय यत्नः कार्य्यः । आतश्चेदं विज्ञानशास्त्रं दर्शनशास्त्राणां कात्स्न्र्यं संपादयतीति दर्शनशास्त्रापेक्षया विज्ञानशास्त्रं श्रेयः ।

तत्र हि श्रोतव्येऽर्थे कर्तव्यमपि किञ्चिदुपपद्यते । उपदेशगृहीतस्यार्थस्य परीक्षाकर्म्मणा तदर्थसाक्षात्काराय प्रयत्नः कर्तव्यो भवतीति ज्ञानकर्म्मणोः सहयोगादवगमपर्य्यन्तं ज्ञानमभिनिवेशश्चोपजायेते, तदिदं विज्ञानं विश्वविद्याया द्वितीयं पर्व ॥२॥

अथ चारित्र्यं कर्म्मयोगः । यथा दृष्टं यथा वा विज्ञातं तदनुसारेणाचरतः कर्म्मजन्या शक्तिसिद्धिर्भवति । आचरणार्थं शक्तिलाभायैव तु दर्शनविज्ञानयोः साफल्यमुपपद्यते । यस्य तु तथा ऽऽचरितुं शक्तिर्नोदयते, तस्येदमुभयमनर्थकं भवति, न स सिद्धिमवाप्नोति । तस्मादेष यथादर्शनं विजानीयात् । यथा-

---

*** इन्द्रियाणां विषयेषु स्पर्शोऽवग्रहः । ईहा चेष्टा; इन्द्रियैर्मनसि विषयाणां प्रापणं मनसा च बुद्धौ प्रापणं बुद्ध्या चात्मनि विषयाणां प्रापणमित्येवं रूपेणेन्द्रियार्थानां मनोबुद्धिद्वारा आत्मनि प्राप्तये या चेष्टा सा ईहा । ततो विषयाणां बुद्ध्या आत्मनि स्थिरीकरणं निर्द्धारणम्, सोऽवगम एव इहावायशब्देनोच्यते । अवगमजनितः संस्कारो धारणा । एतावत्प्रत्यक्षं नाम ज्ञानम्—इति जैनदर्शने सुविशदं व्याख्यानम् ।**

विज्ञातमुपाचरेत्—परिशीलयेत्। तदर्थवशीकारे यत्नमादध्यात्। तथा चैष ब्रह्मणा कर्मणा च सह-युक्तेन पूर्णं विज्ञानमाप्नोति। यथाकामं सिद्धिमाप्नोति ॥३॥

अथैतद्दर्शनं विज्ञानं वा त्र्यधिकरणं प्रकल्पते—अधिभूतं चाध्यात्मं चाधिदैवतं चेति। त्रेधा विभक्ता ह्रीमे विश्वपदार्था भवन्ति। तत्र दर्शनविभागे तावदेकमेव शास्त्रमधिकरणविभागात्त्रेधा विभज्योपदिश्यते। वैशेषिकशास्त्रमाधिभौतिकम्। प्राधानिकं शास्त्रमाध्यात्मिकम्। शारीरकं शास्त्रमाधिदैविकं चेति। प्राधान्यानुरोधेनेदमाख्यातम्, अनुषङ्गात्तु सर्वत्र सर्वे धर्म्मा अविनाभावान्निरूप्यन्ते। तथा हि—

अध्यात्मं तावदिमान् धर्म्मांस्त्रेधा विभज्य पश्यन्ति—

| | | |
|---|---|---|
| १ स्थूलशरीरम् | सूक्ष्मशरीरम् | कारणशरीरं चेत्येवं केचित्। |
| २ भूतमात्रा | प्राणमात्रा | प्रज्ञामात्रा चेत्येवं केचित्। |
| ३ भूतग्रामः | दैवतग्रामः | आत्मग्रामश्चेत्येवं केचित्। |
| ४ शरीरविभागः | प्रकृतिविभागः | आत्मविभागश्चेत्येवं केचित्। |

एतेष्वपि स्थूलशरीरम्, भूतमात्रा, भूतग्रामः, शरीरविभागश्चेत्याधिभौतिकविषयः। सूक्ष्म-शरीरम्, प्राणमात्रा, दैवतग्रामः, प्रकृतिविभागश्चेत्याध्यात्मिकशास्त्रविषयः। कारणशरीरम्, प्रज्ञामात्रा, आत्मग्रामः, आत्मविभागश्चेत्याधिदैविकविषयः।

तत्र यद्यपीदं प्राधानिकमेव शास्त्रं विशेषतोऽध्यात्मशास्त्रं भवति, प्रकृतिविभागानुगतपदार्थानां तत्र भूयसा प्राधान्येन निरूपितत्वात्। तथापि तत्र भूतग्रामाणामात्मग्रामाणां चान्तरेण परिग्रहमध्यात्म-निरूपणासंभवादध्यात्मशास्त्रेऽपि प्रकरणान्तरविधयोपनीयतेंऽशांशतो वैशेषिकं च शारीरकं च। एवमेव वैशेषिकेऽपि शारीरकेऽपि च प्रकरणान्तरविधया तदन्ययोरुपसंग्रहो द्रष्टव्यः। तथा चेदमधि-करणत्रयविभागानुरोधेन विभज्य धर्म्मान्निरूपयितुमेकमेवेदं दर्शनशास्त्रं त्रेधा विभज्योपदिश्यते। वैशे-षिकशास्त्रमन्यत्, प्राधानिकं शास्त्रमन्यत्, शारीरकशास्त्रं चान्यदिति। तत्रेदं वैशेषिकं शरीरविषयम्, प्राधानिकं प्रकृतिविषयम्, शारीरकं त्वात्मविषयं विशिष्य दर्शयति। अथैतत्संबन्धानुबन्धादेव चेतरमपि विषयं दर्शयति। तान्येतानि दर्शनशब्दानि त्रीणि तन्त्राणि।

यद्यप्येतेषु त्रिष्वपि दर्शनतन्त्रेषु तान्येतानि त्रीण्येव प्रकरणानि निरूपयितुमिष्यन्ते—भूतग्रामोप-पन्नं स्थूलशरीरमेकम्, दैवतग्रामोपपन्नं प्रकृतिमण्डलं द्वितीयम्, पुरुषत्रयोपपन्नमात्मसंस्थानं तृतीयं चेति। तथापि दृश्यते प्रत्येकं वैलक्षण्यम्। मुख्यनिरूपणीयप्रकरणानुरोधेनेतरयोरुपसर्गभूतयोः प्रतितन्त्रं भेदोपपत्तेः। उपसर्गभेदवशाच्च प्रतितन्त्रमन्यश्चान्यश्चात्मा निरूपयितुमिष्यते। प्रसिद्धचन्ति हि त्रिविधा आत्मानो ये त्रयः पुरुषाः—क्षरोऽक्षरोऽव्ययश्चेति।

**१—मृत्तिकावद् विकारोपादानभूतः परिणामी कश्चिदव्यक्तः क्षरपुरुषः**—इत्येकः।

**२—कुम्भकारवन्निर्म्माता सर्वशक्तिघनोऽन्तर्य्यामी नियन्ता निर्विकारोऽपरिणामी कश्चिदव्यक्तो ऽक्षरपुरुषो द्वितीयः।**

**३—कार्य्यकारणातीतोऽसङ्ग आलम्बनभूतः सर्वाधारो निराधारः कश्चिदव्यक्तोऽव्ययपुरुष-स्तृतीयः।**

त्रिष्वप्येतेषु पुरुषेषु यत् क्षरं तदिह—द्रव्य-गुण-कर्म्म-सामान्य-विशेष-समवायरूपैः षोढा विभज्यमानमातिष्ठन्ते वैशेषिका विद्वांसः। एष्वेव सर्वेषु क्षरेषु विभवन्तमक्षरं त्वात्मानं जीवात्मप-रमात्मभेदाद् द्वेधा विभक्तं मन्यन्ते। नातः परमव्ययं नामातिरिक्तमात्मानं ते पश्यन्ति। ये त्वक्षरधर्माः, ये चाप्यव्ययधर्म्मास्तानशेषानिहैवात्मन्यन्तर्भावयन्ति। तावतैव चैतस्य जगतः कृतकृत्यतां ते मन्यन्ते। "सर्वं खल्विदं ब्रह्म" "ब्रह्मैवेदं सर्वम्" इति श्रुतौ ब्रह्मशब्देन जगत्प्रकृतिभूतं क्षरमक्षरं वा तद-धिष्ठातारं तेऽभिप्रयन्ति। परिणामिक्षरगुणकस्याक्षरतत्त्वस्यैवात्मत्वेन तत्र प्रतिपन्नत्वात्।

तत्रैतस्मिन् जीवात्मन्यष्टौ गुणान् वैशेषिकाः पश्यन्ति—बुद्धि-प्रयत्नौ, सुख-दुःखे, इच्छा-द्वेषौ, धर्म्माधर्म्मौ चेति ॥

**इति प्रथमं शास्त्रं वैशेषिकं नाम ॥१॥**

अथैतावता कृतकृत्यतामपश्यन्तः प्राधानिकाः सांख्या विद्वांसो भूतभावनत्वेन प्रतिपन्नादमुष्मात् क्षरादात्मनः परमन्यं गुणत्रयसमष्टिरूपं कञ्चिदव्यक्तं जगत्प्रकृतित्वेन प्रतिपद्यन्ते। तन् महदक्षरमित्याचक्षते। अक्षरात्तु पुनरस्मादव्यक्तादन्यं कंचिदव्ययं नामात्मानं ते नातिष्ठन्ते। अव्यक्तस्यैव त्वस्य महतो व्यक्तीभावादिदमशेषं जगदुपपद्यते।

**"भूतं भविष्यत् प्रस्तौमि महद् ब्रह्मैकमक्षरम्। बहुब्रह्मैकमक्षरम्"।**

इति श्रुत्यभिमानात्। अथवा भवत्वन्योऽयमात्मा क्षेत्रज्ञः पुरुषोऽव्ययो नाम। किन्त्वेष चेतनो भोक्तैव केवलं न त्वस्यैतस्मिन् सृष्टिविधौ स्रष्टृत्वेन दृश्यते कश्चनोपयोग इत्याहुः ॥

**तदिदं द्वितीयं शास्त्रं प्राधानिकं नाम ॥२॥**

अथैताभ्यां परमुत्तमं शास्त्रं शारीरकं विद्यात्। तत्र हि शारीरका विद्वांसः पुनरेताभ्यां क्षराक्षराभ्यामेवैतस्मिन् सृष्टिविधौ कृतकृत्यतामपश्यन्तः परावरज्ञा अक्षरादपि चोत्कृष्टं कंचिदव्ययं नामात्मानमेतद्विश्वरूपत्वेनातिष्ठन्ते। **"सर्वं खल्विदं ब्रह्म"**; **"ब्रह्मैवेदं सर्वम्"** इति श्रुतौ ब्रह्मणोऽव्ययत्वेनाभिप्रेतत्वात्।

**"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥(१५।१६)**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥(१५।१७)**
**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥(१५।१८)**

ऐतदात्म्यमिदं सर्वमिति कृत्वैवेदं सर्वं ब्रह्मेत्याम्नायते—इति पश्यन्ति। अत एवास्य विश्वस्याव्यक्तैकसारत्वं प्रधानमात्रपर्य्यवसायित्वं चातिष्ठमानानां सांख्यानां मतमपर्य्याप्तमस्तीत्ययमर्थः स्पष्टीकृतो भगवद्गीतायाम्

**"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥७।२४॥**
**नाहं प्रकाशः सर्वस्य योगमायासमावृतः।**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥७।२५॥**
**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत्।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥७।१३॥**
**दैवी ह्येषा गुणमयी मम माया दुरत्यया।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥७।१४॥**
**अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥८।१९॥**
**परस्तस्मात्तु भावोऽन्योऽव्यक्तो ऽव्यक्तात् सनातनः।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥८।२०॥**
**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥८।२१॥**

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।**
**यस्यान्तस्थानि भूतानि येन सर्वमिदं ततम्" ॥८।२२। इति।**

**"मम परमं भाव"**—मित्यत्रास्मच्छब्देनैतच्छरीराभिमानितया शारीरकः प्राज्ञ आत्मा विवक्ष्यते। तस्य चेदमात्मत्वं किं मूलकमिति जिज्ञासायामव्यक्ताक्षरपरमत्वं सांख्या मन्यन्ते। अक्षरालम्वनचिद-व्ययपरमत्वं तु गीतासिद्धान्तः ॥१॥

अथवा भगवद्गीतायामस्मच्छब्दः सर्वोऽप्यव्ययैकमात्रवचनो विवक्ष्यते।

**"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥"७।१३॥**

इति गीतायामस्मच्छब्देनाव्ययस्योपदेशात् स एव शारीरको भवति, नत्वयं प्राज्ञ आत्मा। तत्र च द्विविधोऽयमव्ययः प्रत्येतव्यः। जीवाव्ययः शरीराभिमानी, परमाव्ययो विश्वाभिमानीति भेदात्। तत्र चेह **"परं भावमजानन्तो ममे"**-तिवाक्ये अस्मच्छब्देन शरीराभिमानी जीवात्मा लक्ष्यते। तस्य परं भावं विश्वाभिमानिनं परमाव्ययं विजानीयात्। स एव च परमाव्ययो ममैतस्य जीवाव्ययस्य परमं धामो-पपद्यते ।

स चायमुभयविधोऽप्यव्ययो योगमायावशादक्षरेऽस्मिन्नितान्तमैकभाव्यं गमितोऽस्तीति हेतो-रक्षरात् पृथक्त्वेनायमव्ययः सर्वस्य न प्रकाशोऽस्तीति कृत्वा प्राज्ञमात्मानमव्यक्तमात्रपर्य्यवसानं मन्यन्ते सांख्याः। तदव्यक्तनिगूढात्माव्ययपर्य्यवसानं त्ववधेयमिति भगवद्गीताया आदेशः ॥२॥

अथवा स्थूलारुन्धतीन्यायेनैषां त्रयाणां वैशेषिक-प्राधानिक-शारीरकाणां क्रमिकप्रवृत्तिरवगन्तव्या। तथा हि—

क्षरपुरुषपर्य्यवसानमिदं वैशेषिकं प्रथमं[१] दर्शनम्, ततोऽव्यक्ताक्षरपुरुषपर्य्यवसानमिदं प्राधानिकं द्वितीयं[२] दर्शनम्, अथ पुनरन्तेऽव्ययपुरुषपर्य्यवसानमिदं तृतीयं[३] शारीरकं दर्शनमिति बोधसौकर्य्या-यैतदनुग्रहदृष्टिर्भाव्या। त्रिभिश्चैभिः प्रकरणैरिदमेकमेव शास्त्रं भाव्यम्। इत्थं चैतत् क्षरब्रह्मणोऽक्षर-ब्रह्मणोऽव्ययब्रह्मणश्च पृथक्तन्त्रेण क्रमिकमात्मत्वमभ्युपगच्छतामेषां वैशेषिक-प्राधानिक-शारीरकाणां क्रमनिर्देशनिबन्धनं प्रतितन्त्रवैषम्यं सोपाधिकत्वादुपेक्ष्यम्। तत्र चामुष्मिन् वैशेषिकनये विस्तरतो निरू-पितस्यैतस्य सगुणभावलक्षणस्य क्षरब्रह्मणः, सांख्यनये च विस्तरतो निरूपितस्यैतस्याव्यक्तलक्षणस्या-क्षरब्रह्मणो यदवशिष्टं विप्रतिपन्नं वा विज्ञानं तदनुव्याख्यानायेदं शारीरकं शास्त्रं प्रवृत्तमस्तीति भाव्यम् ॥३॥

अपि चान्यथा पुनः स्थूलारुन्धतीन्यायेनैतान्यात्मप्रकरणानि विभज्य ज्ञेयानि। तथा हि— अमृतम्, ब्रह्म, शुक्रं चेति त्रितयमनुसंहितमेकोऽश्वत्थनामाऽयमात्मा विवक्ष्यते। तत्र शुक्रावच्छेदेन तावदात्मा देवसत्यानुगतश्चतुर्वेदमन्त्रसंहितानुगतेन ब्राह्मणप्रकरणेन निरूप्यते। ततो ब्रह्मावच्छेदेन सूक्ष्मप्रकृति-रात्मा ब्रह्मसत्यानुगत आरण्यकभागप्रकरणेन निरूप्यते। ततः पुनरमृतावच्छेदेन निगूढतमः पुरुष आत्मा उपनिषद्भागप्रकरणेन निरूप्यते। उपनिषत्संघश्चायं वेदान्तः।

उपनिषदां तात्पर्य्यनिरूपणाय च द्वे तन्त्रे प्रवर्तेते-ब्रह्मसूत्रं गीताशास्त्रं चेति। तत्राक्षरपुरुषो ब्रह्मसूत्रेण, अव्ययपुरुषः पुनरनेन गीताशास्त्रेण सुविशदं व्याख्यातः। नाव्ययादधिकं किञ्चिदस्तीति सा काष्ठा सा परा गतिरिरिति निष्कर्षः ।

तत्रेदमव्ययब्रह्मैवास्य भगवद्गीता-ब्रह्मसूत्रादिरूपस्य शारीरकदर्शनस्य मुख्यः शास्त्रार्थः। यद्यपि तत्र ब्रह्मसूत्रे **"अथातो ब्रह्मजिज्ञासा"** १।१।१। **"जन्माद्यस्य यतः** (१।१।२) **"शास्त्रयोनित्वात्"** १।१।३। **"तत्तु समन्वयात्"** १।१।४। इत्येवं प्रतिजानानेन शास्त्रकृता सामान्येन ब्रह्मशब्दः कश्चि-दर्थो व्याचिख्यासितः प्रतिज्ञायते। स च क्षर एव पुरुषः संभवति। **"तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते"** इति श्रुत्या अनुपसृष्टेन ब्रह्मशब्देन यथासंभवं क्षरपुरुषस्यैवाभिप्रेतत्वात्। परब्रह्मशब्देनाव्ययम्, परम-

ब्रह्मशब्देनाक्षरं च व्यवहरन्त्यां गीतायाम् **"ब्रह्माक्षरसमुद्भवम्"** (३।१५) **"ब्रह्मणो हि प्रतिष्ठाहम्"** (१४।२७) इत्यादिष्वनुपसृष्टेन ब्रह्मशब्देन क्षरपुरुषस्यैव ग्रहीतुमिष्टतया समानतन्त्रेऽस्मिन् शारीरकसूत्रेऽपि तथैवाभ्युपगन्तुं युक्तत्त्वाच्च। एतमेवाभिप्रायं दर्शयितुमिह शारीरकसूत्रे **"जन्माद्यस्य यतः"** इत्येवमस्य क्षरब्रह्मणो व्याचिख्यासितस्य लक्षणमाख्यायते । क्षरादेव हि ब्रह्मणः सर्वमिदं जायते, तत्रैव प्रतितिष्ठति, संतिष्ठते च। अक्षराव्ययोरपरिणामितया ततो विकारसंभवायोगात् । तस्मात् क्षरस्यैव ब्रह्मणो निरूपणमिदं शारीरकदर्शनं प्रतिभातीति कश्चिद् ब्रूयात्, तं प्रतिब्रूमः— कार्य्यारम्भकत्वेनोपादानत्वेन निर्दिष्टस्य ब्रह्मणः क्षरत्वेनोपपत्तावपि सामान्येन सर्वत्र ब्रह्मशब्दस्य क्षरपरत्वाभ्युपगमे **"सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म"**—इत्यादि—ब्रह्मवाक्यानामशेषाणामविषयत्वमापद्येत । तस्मादविशेषेण प्रयुक्तोऽयं ब्रह्मशब्दोऽव्ययाक्षरक्षरपुरुषान् व्यासज्य ब्रूते, प्रत्येकतो वा। त्रिभिः पुरुषैरेकः पुरुष इति कृत्वा सोऽव्ययः, सोऽक्षरः—स क्षरः—इत्येवमेकः पुरुषः शारीरकशास्त्रे व्याख्यातव्यः । क्षरोऽक्षरे, सोऽव्यये—इत्येवं त्रयाणामेकीभावः **"तात्स्थ्यात् ताच्छब्द्यम्"** इति न्यायेनाव्ययशब्दबोध्यो भवितुमर्हतीत्येषामविनाभूतानां त्रयाणामव्ययपरत्वादव्यये निष्ठा वक्तव्या ।

सोऽयं त्रिपुरुषः पुरुषो द्वेधानुभूयते—परमात्मा प्रत्यगात्मा च। ईश्वरो विश्वाभिमानी परमात्मा। शारीरकोऽयं जीवः प्रत्यगात्मा। तयोः पुरुषयोरन्योन्यमेकत्वं वा विभिन्नत्वं वाऽस्तीति संशये तन्निरूपणं मुख्यः शारीरकशास्त्रार्थः। तत्र दर्शनान्तरसिद्धान्तानुसारात् क्षरपुरुषमात्रेणाक्षरपुरुषमात्रेण वा सर्वार्थसिद्धौ किमर्थः पुनरत्रैष तृतीयस्याव्ययपुरुषस्याभ्युपगम इत्याशङ्कायां तत्समाधानाय चेदं प्रकरणान्तरं गीताशास्त्रं प्रवर्तते इत्यवधेयम्।

प्रतितन्त्रं सूत्रमयं कारिकामयं च शास्त्रं भवति। तत्र औलूक्यसूत्रं षडध्यायीसूत्रं शारीरकसूत्रं चेति सूत्रसंदर्भाः। अथ कारिकासंदर्भस्तु प्रामाणिको वैशेषिकस्य विलुप्तत्वान्नोपलभ्यते। किन्तु यथा ईश्वरकृष्णकृता कारिकासप्ततिरमुष्मिन् प्राधानिके तन्त्रे दृश्यते, तथेयं भगवद्गीतोपनिषदस्मिन् शारीरके तन्त्रे कारिकारूपेण संप्रथते।

तथा चेदं कृष्णद्वैपायनप्रणीतं कृष्णार्जुनसंवादप्रसङ्गेन श्रीकृष्णवासुदेवोपदिष्टसिद्धान्तप्रकरणरूपमध्यात्मशास्त्रं भवति गीता नाम। अयं तु विशेषः। एकस्मिन्नेव तन्त्रे शारीरकसूत्रं तावद्—**भूतात्मामृतात्मलक्षणयोः प्रत्यगात्मपरमात्मनोर्जी**वेश्वरयोरंशांशिभावेन भेदाभेदसिद्धान्तव्याख्यानाय प्रवर्तते । इदं तु गीताशास्त्रमुभयोरपि तयो**र्जीवेश्वरलक्षणयोः प्रत्यगात्मपरमात्मनोः** प्रत्येकस्वरूपे परापरप्रकृतिविशेषक्षराक्षरोभयाश्रयत्वेन तृतीयपुरुषस्याव्ययस्य समावेशविज्ञानाय विभज्य प्रवर्तते। जीवेश्वराक्षरयोर्भेदाभेदनिरूपणं ब्रह्मसूत्रप्रकरणार्थः। जीवस्य चेश्वरस्य चामृतात्मनि क्षराक्षराभ्यामतिरेकेणाव्ययपुरुषनिरूपणं गीताप्रकरणार्थः—इति निष्कर्षः ॥

वैशेषिक-प्राधानिकोभयप्रकरणोत्तरं हीदं सिद्धान्तप्रकरणमुपदिश्यते। प्राधानिकसिद्धान्तानां बहूनामुपादेयत्वेऽपि केषांचिदनादेयतया तत्प्रत्याख्यानायैवायमुत्तरः सन्दर्भः प्रवर्तते। तत्र प्रकृति-पुरुषसंबन्धेन सांख्यप्रकरणोक्तं सिद्धान्तद्वयमिह प्रत्याख्येयम्। तद् यथा—सांख्यप्रकरणे तावदव्यक्तमक्षरं भोक्तुः पुरुषस्य भोग्यार्थसृष्ट्यै प्रकृतित्वेनाख्यायते। उपादानकारणं प्रकृतिः। तस्य चाक्षरस्य परिणामित्वमास्थीयते। पुरुषत्वमात्मत्वं च तस्य नेष्यते। यस्तु पुरुष आत्मा, स क्षेत्रज्ञश्चिन्मात्रो निष्क्रियो जगत्सृष्टावुदासीन इति हि तत्र सिद्धान्तः। स चेहांशतः प्रत्याख्यायते । तथा हि—क्षरमेव तावद् जगज्जन्मस्थितिभङ्गायोपादानं भवति। अक्षरं तु सर्वजगन्नियन्तृभूतं निमित्तकारणमात्रम्। तथा चेह सांख्यतन्त्रे प्रकृतिसंबन्धेन यावत् किञ्चिदाख्यातं तत्सर्वं क्षरब्रह्मानुगतं वेदितव्यम्।

**"अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥८।१८॥**

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः" ॥८।२०॥**

इत्येवमव्यक्तशब्देन यद्यपि क्षरमक्षरमव्ययं च स्मर्य्यते, तथापि प्रकृत्यभिप्रायेण श्रूयमाणोऽयमव्यक्त-शब्दः क्षरब्रह्मपर एवोन्नेयो, न त्वक्षराव्यक्तपरः। **"तथा क्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति"** इति श्रुतौ तु क्षरादित्येव पाठो भाव्यः। अक्षरादिति पाठाभ्युपगमे तु क्षराक्षरयोरात्यन्तिक-संश्लेषेणावस्थानात् क्षरावसायिधर्म्माणामक्षरेऽप्युपचारः कल्प्यः। अथाव्यये परब्रह्मशब्दः। अक्षरे तु परमब्रह्मशब्दः। यत्र तु केवलो ब्रह्मशब्दः पठ्यते स क्षरमात्रपर्य्यवसितो भवति, **"ब्रह्माक्षरसमुद्भवम्"** इति गीतावाक्येन तथैवावगमात्।

**"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः ।**
**तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" ॥(उप)**

इत्यादि—श्रुतिवाक्येष्वपि तस्य क्षरपरत्वेनैवोपनेयत्वाच्च। **"अथातो ब्रह्मजिज्ञासा"** (१।१।१) **"जन्माद्यस्य यतः"** (१।१।२।) **"शास्त्रयोनित्वात्"** (१।१।३) **"तत्तु समन्वयात्"** (१।१।४) इति ब्रह्म-सूत्रोपक्रमे तूपादीयमानोऽयं ब्रह्मशब्दः क्षराभिप्रायोऽपि नाक्षरमेकान्ततो व्यपवृङ्क्ते। अक्षरस्य ब्रह्मत्वं जगज्जन्मादिकारणत्वं च क्षरेऽक्षरसमन्वयादेवोपपद्यते न तु स्वातन्त्र्येण। स्वरूपेण सतोऽक्षरस्या-विनाशिनोऽपरिणामितया विकाररूपत्वासंभवात्। अव्ययालम्बितोऽयमक्षरः प्राणाब्वागन्नादान्नसमु-च्चयात्मकपञ्चक्षरकूटस्थ आत्मा भवति। पुरुषत्वं त्वेषां व्यासज्यवृत्त्यपि "समुदाये दृष्टाः शब्दा अव-यवेऽपि वर्तन्ते" इति न्यायात् प्रत्येकपर्य्याप्तमुपपद्यते। अत एव **"द्वाविमौ पुरुषौ लोके"** १५।१६। **"उत्तमः पुरुषस्त्वन्यः"**—१५।१७। इत्येवमादयो व्यवहाराः सङ्गच्छन्ते। इत्थमक्षरस्यैतस्य पुरुषत्वमात्मत्वमपरि-णामित्वं चास्थाय सर्वे वेदान्ता एतदक्षरपरतया ब्रह्मसूत्रे व्याख्याताः। अथेह पुनर्गीताशास्त्रे—

**"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥**

इत्येवमुपदिशता भगवता क्षरादस्मादक्षराच्चातिरिक्तः कश्चिदव्ययो नाम पुरुषो मुख्यतयाऽऽत्मत्वेन विधीयते। तस्य च—"उदासीनवदासीनमसक्तं तेषु कर्म्मसु" इत्येवमसङ्गत्वादुदासीनत्वं प्रतिपादय-ताऽपि नैकान्ततः सृष्टौ कारणत्वं निरस्यते।

**"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥"** (४।६)

इत्येवं प्रकृत्यवष्टम्भेनाशेषविश्वोत्पादकताया अस्मिन्नव्ययपुरुष एव सिद्धान्तितत्वात्। अत एवैतमव्यय-लक्षणं पुरुषविशेषमनुदर्शयितुमक्षरप्रतिपादकसंदर्भात् पृथक्त्वेनैष गीताशास्त्रारम्भ इति भाव्यम्।

यत्तु दर्शनशास्त्राणां षट्त्वमभिमन्यमानाः केचन विद्वांसो न्यायदर्शनं योगदर्शनं मीमांसादर्शनं चेति त्रीणि दर्शनान्यतिरिक्तान्याचक्षते, तदविचारितरमणीयं साहसमात्रम्। विश्वात्मदर्शनोपचार*स्याधिभूतमध्यात्ममधिदैवतमित्येवं त्रिष्वेव विश्वाधिकरणेषु लब्धावसरतया ततोऽन्यत्रैकदेशिकेऽर्थे याथातथ्येनात्मदर्शनार्थं प्रयत्नालाभाद् दर्शन-शास्त्रातिरेकस्यायुक्तत्वात्। अन्यथा शब्दशास्त्र-निरुक्तशास्त्र-साहित्यशास्त्र-धर्म्मशास्त्र-ज्यौतिषशास्त्रादीनामप्यैकदेशिकशास्त्राणां दर्शनशास्त्रत्वापत्तौ दर्शनशास्त्रषट्त्वाभिमानस्यानुपपत्तिर्गले पतिता स्यात्। अस्ति हि शब्दशास्त्रा-दिवदिदं तर्कन्यायशास्त्रमप्यान्वीक्षिकनीतिविज्ञानप्रकरणभूतकथाशास्त्रत्वादैकदेशिकं शास्त्रम्, तत्रत्य-षोडशपदार्थानां कथाङ्गत्वेनोपन्यासात्, तेषामात्मशरीरेन्द्रियार्थादिवद् विश्वाङ्गत्वेनानभिप्रेतत्वात्।

---

* **तत्साधनोपायप्रयोगस्तदुपचारः। तद्व्याघातोऽपचारः॥**

यद्यप्यात्मशरीरेन्द्रियार्थादिद्वादशप्रमेयभावानां दर्शनशास्त्रवत् तत्राप्यस्ति विचारप्रसङ्गस्तथापि तेषां वादिप्रतिवादिविचारकथोदाहरणविधया तत्रोपन्यासो दृश्यते। तैश्चोपन्यस्तैः कथास्वरूपं विज्ञापयितुमिष्यते, न तु विश्वात्मस्वरूपम्, पूर्वापरप्रकरणदर्शनेन तथैवार्थलाभात्। तस्मादिदं तर्कन्यायशास्त्रमैकदेशिकत्वाद्दर्शनशास्त्रं नास्तीति विज्ञेयम् ।।

अथैतद्योगशास्त्रं सांख्यशास्त्रस्यैव चारित्र्यलक्षणमुत्तराङ्गम्, योगप्रकरणस्य पूर्वसांख्योपपाद्यकैवल्यज्ञानोपायभूतत्वात्। अत एवेदमुत्तरसांख्यप्रवचनं सेश्वरसांख्यनाम्ना प्रसिद्धमस्तीति भाव्यम् ।।

एवं पूर्वमीमांसाशास्त्रमपि कर्म्मविधायकवैदिकवाक्यार्थसमन्वयोपपादकतर्कशास्त्रं न तु विश्वशास्त्रम्। यदि तु कर्म्मणो ब्रह्मवद् विश्वरूपत्वं संभवतीत्युपपद्यते ब्रह्ममीमांसावदस्यापि विश्वशास्त्रत्वमिति कश्चिद् ब्रूयात्, स प्रतिवक्तव्यः। जैमिनिकृतेन द्वादशलक्षणेन कर्म्मप्रकरणेन, शाण्डिल्यकृतेन चतुर्लक्षणेन भक्तिप्रकरणेन, बादरायणकृतेन चतुर्लक्षणेन ब्रह्मप्रकरणेन विंशतिलक्षणस्यैकस्य मीमांसाशास्त्रस्य प्रकरणत्रयावगुण्ठितत्वाच्छास्त्रैकत्वं प्रतिपत्तव्यम्। तथा च वैशेषिकप्राधानिकशारीरकभेदाद्दर्शनत्रयमेवोपपद्यते। त्रिभिर्वा तैरेकमेवेदं दर्शनशास्त्रं विद्यादिति विदुषां परामर्शः।

इति दर्शनशास्त्रसमालोचना ।।

# अथ विषयरहस्ये

## आत्मसमीक्षा

### बुद्धियोगज्ञानौपयिकं जीवात्मज्ञानम्

सर्वविधानुशोकनिवृत्त्युपायो बुद्धियोगो गीतायामुपदिश्यते। स चायं बुद्धेर्योगो जीवानामात्मन्येवाधीयते, तस्मादयमात्मा विशिष्यावगन्तव्य इत्युच्यते।

### जीवप्रजापतेश्चतुःपर्वत्वम्

**"प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव"** (य० सं १०।२०) इति मन्त्रश्रवणात्सर्वमिदमेकैकं रूपमेकैकः प्रजापतिः। आह च—**"प्रजापतिर्वा इदं सर्वमिति"** (श० ब्रा०)। सोऽयं प्रजापतिर्द्वेधा विज्ञायते—ईश्वरो जीवश्चेति। तत्रैष जीवप्रजापतिश्चतुष्पर्वा द्रष्टव्यः—**आत्मा, प्राणो, वित्तम्, पाप्मा** चेति। **"चतुष्टयं वा इदं सर्वम्"**—इति निगमो भवति। उक्थमात्मा, अर्कः प्राणः, द्रविणं वित्तम्। तच्च वीर्य्यं वा, अन्नं वा, पशुर्वा। अथावरणं पाप्मा। तत्र प्राणो वित्तं चेत्युपकरणमनुकूलो धर्म्मः। पाप्मा तूपसर्गः प्रतिकूलो धर्म्मः। प्राणादयो महिमानः। स्वे स्वे महिम्नि चायमात्माऽवतिष्ठते। आकैवल्यं नित्यमेवास्मिन् प्राणे च वित्ते चायमात्मोपपद्यते। यावद् वित्तं तावदात्मा, प्राणे च वित्ते चास्याभिव्याप्तत्वात्। पाप्मा त्वात्मनो विद्यां शक्तिं चापचाययति। अथ प्राणोऽयमात्मन्यभेदेनानुषज्जते। ओतप्रोतोऽयमात्मा प्राणेन संपद्यते—आत्मनि प्राणः प्राणे चायमात्मेति—अन्तर्यामः संबन्धः, शीतजलद्रवताहेतुवरुणाग्निवत्। अथ वित्तमस्मिन्नुपाधीयते, तस्यायं बहिर्यामः संबन्धः, प्रतप्तजलतापहेत्वग्निवत्। पाप्मनस्तूपयामः संबन्धः—पात्रोपहिताग्निवत्॥

### १—आत्मा परात्परः

तत्रायमात्मा त्रिवर्गो द्रष्टव्यः—अमृतं, ब्रह्म, शुक्रं चेति। परात्परः, अव्ययः, अक्षरः, क्षरश्चेत्यमृतानि। अनन्तबलसंपन्नो रसः परात्परः। उन्मुग्धसत्ताचिदानन्दानामैकात्म्यं निर्विशेषो भावो रसः। स आनन्दः। सोऽयमवाङ्मनसगोचरत्वादनिर्वचनीयश्चाविज्ञेयश्च। तत्रैतस्मिन्नमृते रसे मृत्यवोऽनन्ता बललक्षणा आलम्बन्ते। मृत्युगर्भितः स रसो ज्ञानम्। असन्ति हि बलानि मृत्यवः। तेष्वियममृतरूपा सत्ता रसः। सत्ताया एकत्वादेकमेवाद्वितीयमिदं निर्विशेषं ब्रह्म। तत्रेदमुद्बुद्धसत्ताचिदानन्दानामैकात्म्यं परात्परो भावः। तस्यैतस्य त्रैविध्यं पश्यन्ति—असीमोऽसावत्यनपिनद्धो भूमा विश्वातीतः, सोऽन्यः। अथैष शून्यो बिन्दुरणिमा, सोऽन्यो विश्वातीतः। अथ यौ भूमाणिमानौ विश्वस्मिन्नुपपद्येते, तौ सनिरूपकौ भवतः। एक एवार्थः सोऽन्यान्यापेक्षो भूमा च भवत्यणिमा च। दृश्यते हि घटे सर्षपाद् भूमा, पर्वतादणिमा। तस्मादेष तृतीयोऽन्यः। तेनायं विश्वात्मा च जीवात्मा च भवत्यणोरणीयांश्च महतो महीयांश्चेति विद्यात्॥

## अमृता आत्मानस्त्रयः पुरुषाः

अथ अव्ययः, अक्षरः, क्षर इत्येते त्रयः पुरुषाः। अनवच्छिन्नत्वे सति मायोपजनितपुरोपाधिकावच्छेदवत्त्वं पुरुषत्वम्। तत्र आनन्द-विज्ञानाभ्यां विद्यारूपाभ्यां ब्रह्मभक्तिभ्याम्, वाक्-प्राणाभ्यां वीर्य्यरूपाभ्यां कर्मभक्तिभ्यां चोपचीयमानं श्वोवसीयसं मनोऽव्ययं नाम। स चिदात्मा, स कामात्मा। एतैरेवानन्दादिभिरव्ययैर्धर्म्मैर्धर्मी सच्चिदानन्दोऽक्षरः पुरुषो मनसा कामयमानः, प्राणेन तप्यन्, वाचा श्राम्यन् क्षरं ब्रह्म विकुर्वन् इमां सर्वां सृष्टिमातनुते। इन्द्राविष्णुभ्यामन्तर्यामिरूपाभ्यां हृद्यभक्तिभ्यामृताभ्याम्, तथा अग्नीषोमाभ्यां सूत्रात्मरूपाभ्यां पृष्ठ्यभक्तिभ्यामृताभ्यां चोपचीयमानः सत्यो ब्रह्मायमक्षरः पुरुषो हृदयादारभ्य पृष्ठपर्य्यन्तं गर्भे तिष्ठन् विश्वमिदमात्मन्याधत्ते। आत्मनि विश्वं विश्वस्मिन्नात्मानं जुहोतीति, स सर्वहुद् यज्ञः संपद्यते। यज्ञो विष्णुः। ब्रह्म च कर्म्म च द्वे अव्ययरूपे। ब्रह्म विद्या, कर्म्म वीर्य्यम्॥ तत्रैतत् कर्म्म द्विविधम्—प्रवृत्तं च निवृत्तं च। प्रवृत्तेन कर्म्मणा विश्वयज्ञः प्रवर्तते, तदिदं विश्वं दृश्यते। अथ निवृत्तेन कर्म्मणा स यज्ञो निवर्तते, विश्वं नश्यति। तथा चैतत्प्रवृत्तिकर्म्मावच्छिन्नोऽयमक्षरो विष्णुर्यज्ञः। अथ निवृत्तिकर्म्मावच्छिन्नः पुनरयमेवाक्षरः ऋतुध्वंसी महेश्वरो नाम विज्ञायते। स विष्णुरेवायं पर्य्यायेण गतिं परिवर्तयन्महेश्वरो नाम संहारको जायते। स्थितं हीदं विश्वमनुक्षणं गतिमदस्तीति जगदित्युच्यते। स्थिति-गतिभ्यां योगादिदं नानावस्थं दृश्यते। द्विविधा गतिः। अर्वाचीना स्थित्यै प्रकल्पते, पराचीना विनाशायोपपद्यते। तदुभयगत्यवच्छिन्नाभ्यामिन्द्राविष्णुभ्यां संपद्यमानः स्थित्यवच्छिन्नो ब्रह्मा विश्वमिदं जनयति रक्षति संहरतीति विजानीयात्। स आत्मा।

तस्मिन्नात्मनि विश्वाहुतिर्भोगः। तस्यैतस्य भोगायतनं शरीरं नाम। तदिदमग्नीषोमावक्षरौ जनयतः। विकासवृत्तिरग्निस्तेजः। संकोचवृत्तिः सोमः स्नेहः। तयोस्तारतम्येन योगात् सर्वं मूर्तद्रव्यमुत्पद्यते। मूर्तं चेदं शरीरम्। तदाहुः—"अग्नीषोमात्मकं जगदिति"। तदिदमात्मना जनितं शरीरमात्मैव भवति। अत एव शरीरधर्म्मान् दर्शयन् अध्यात्मं ब्रुवन् दर्शयति। तत्रैतदध्यात्मं यावदेव पौरुषं रूपं विजानन्ति तदमृतं नामात्मभक्तिर्द्रष्टव्या।

## आत्मानः पञ्च ब्रह्माणः

अथाक्षरपुरुषनियुक्तः क्षरपुरुषः पञ्चधा विकुरुते—प्राणः, आपः, वाक्, अन्नम्, अन्नाद इति।

**"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते"।** यस्यैते नामरूपे तदन्नम्। नाम्ना रूपेण चाभिनीतमिदं सर्वम्। तदन्नमेव पश्यामो यदिदं किञ्चन परिपश्यामः। यद् भूतं च भविष्यच्च किञ्चन भावयामः—ब्रह्मैवेदं सर्वं प्राणादिभेदात् पञ्चधा विभक्तं मन्यामहे। तत्पुनर्द्वेधा विभक्तं विद्यात्—ऋतं च सत्यं चेति। प्राणः, वाग्, अन्नाद—इत्यग्नित्रयं सत्यम्। आपः, अन्नम्—इति सोमद्वयमृतम्। सत्यं ब्रह्म, ऋतं सुब्रह्म। कामयमानस्याक्षरपुरुषस्यैव तु सर्वमिदमृतं च सत्यं चाभीद्धात् तपसोऽध्यजायत। अग्निः सत्यम्, सोम ऋतम्। सहृदयशरीरं सत्यम्। अहृदयशरीरमृतम्। प्रतिष्ठायां सत्यशब्दः। स्वप्रतिष्ठया प्रतितिष्ठन् सत्यो भवति। अन्यप्रतिष्ठया तु प्रतितिष्ठति यस्मिन् स्वप्रतिष्ठा नास्ति तद् ऋतम्। नैतदुभयमन्योन्यविनाकृतं भवति—**"ऋतं सत्येऽधायि, सत्यमृतेऽधायीति"** यजुःश्रुतेः। तत्रेदमृतं प्रधानम्, सत्यानामृतजनितत्वाद् ऋतगर्भत्वाद् ऋतपरायणत्वाच्च। सत्योऽयं घटो मृद्भिर्ऋताभिरुत्तिष्ठते तत्रोपतिष्ठते तत्रैवान्ते संतिष्ठते चेति दृश्यते। श्रूयते च—**"ऋतमेव परमेष्ठि ऋतं नात्येति किञ्चन। ऋते समुद्र आहित ऋते भूमिरियं श्रिता"** इति। तत्रैतेषु पञ्चसु ब्रह्मसु आपश्चान्नं चेति द्वे ऋते सोमत्वात्, अथान्यानि त्रीणि सत्यानि, अग्नित्वात्॥

तस्यैतस्याग्नेः सत्यस्य विज्ञाने त्रयीशब्दो ब्रह्मशब्दो वेदशब्दो विद्याशब्दश्च। अथ सोमविज्ञाने अथर्वशब्दः सुब्रह्मशब्दः सुवेदशब्दश्च॥

तदिदमग्निश्च सोमश्चेत्युभयं ब्रह्म । अग्नावाहूयमानः सोमो यद्रूपं लभते, स यज्ञः । अग्नीषोमयोर्ऋतसत्ययोरैकभाव्यं यज्ञः । यज्ञो हीदं सर्वं यदिदं किञ्चन पश्यामः—अग्नीषोमीयत्वात् सर्वस्य ।

तत्रायं सत्योऽग्निस्त्रिविधोऽसृज्यत—प्राणः, वाग्, अन्नाद इति ।

त्रयोऽप्येते त्रेधा संज्ञायन्ते—

प्राणाग्निः, वागग्निः, अन्नादाग्निरिति वा ।

याजुषाग्निः, आङ्गिरसाग्निः, पशव्याग्निरिति वा ।

ब्रह्माग्निः, देवाग्निः, भूताग्निरिति वा ।

अग्नित्वेन साधर्म्येऽपि भिन्नजातीया एते त्रयोऽग्नयः । तेषां रूपभेदो ब्रह्मविज्ञाने वैशद्येन व्याख्यातो द्रष्टव्यः ।

तत्रायं प्राणाग्निर्ब्रह्मा तपसा तप्यन्ननादीनि परमेष्ठीनि ऋतानि परिगृह्य तैः **सत्यानि जनयं**स्तैरेव सत्यैः प्रजापतेरात्म-प्राण-पशुभिस्त्रिपर्वणस्तमात्मानं कारणशरीरं चोद्भावयति । स च सत्य आत्मा हृदयस्थो मनोमयो भारूप आकाशात्मा महीयान् वा अणीयान् वा ।।१।। अथ वागग्निर्विष्णुर्ब्रह्मशरीरात् प्राणान् परिगृह्य **तैर्देवान् जन**यंस्तैरेव देवैः प्रजापतेः प्राणं सूक्ष्मशरीरं चोद्भावयति । स चैकर्षिर्वा सप्तर्षिर्वा दशर्षिर्वा नानारूपैरधिदैवतमध्यात्मं वाऽधिभूतं वा संप्लवते ।।२।। अथायमन्नादाग्निर्महादेवो रुद्रो विष्णोः शिपिविष्टात् पशून् परिगृह्य तै**र्भूतानि जनयं**स्तैरेव भूतैः प्रजापतेः पशून् स्थूलशरीरं चोद्भावयति । पशुमयं हीदं भौतिकं स्थूलशरीरम् । तत्रैतानि [१]गुणभूतानि, [२]परमाणुभूतानि, [३]त्रसरेणुभूतानि, [४]महाभूतानि, [५]सत्त्वभूतानि चेति पञ्चधा विवर्तमानानि संप्लवन्ते ।।३।। एत एव त्रयोऽग्नयो ब्रह्मविष्णु-महेश्वराः सत्य-देव-भूतभेदात् पृथक्तन्त्रा अपि संहत्यैकनिकायाः सन्त इमामेकैकां मूर्तिमधितिष्ठन्ति । उक्तं चाभियुक्तैः—"एका मूर्तिस्त्रयो देवा ब्रह्म-विष्णु-महेश्वराः"—इति । प्रतिशरीरं ब्रह्मा ऋतपतिः सत्यपतिर्विधारणो जनकः, विष्णुः प्राणपतिर्देवपतिराकर्षणो रक्षकः, अथ महेश्वरः पशुपतिर्भूतपतिर्विक्षेपणः संहारकः । अथैतेषां त्रयाणां मध्ये ब्रह्मणो वाङ्मयी प्रकृतिः पत्नी, विष्णोरम्मयी प्रकृतिः पत्नी, रुद्रस्याग्निमयी प्रकृतिः पत्नी इति विज्ञेयम् ।।

इत्थं चायमत्रात्मनिष्कर्षः सिद्धो भवति—

(१) अमृतवर्गे तावत्—

१ परात्परो भूमा

२ अव्ययः पुरुषः

३ अक्षरः पुरुषः

४ क्षरः पुरुषः—इति चत्वार आत्मानोऽमृतसत्याः ।

(२) अथ ब्रह्मवर्गे—

५ शान्तात्मा प्रकृतिः—ब्रह्माग्निः—ब्रह्मा (१)

६ महानात्मा प्रकृतिः । · · · · · · · · · · अब्लक्षणः सोमः (४)

७ विज्ञानात्मा प्रकृतिः—देवाग्निः—नारायणः (२)

८ प्रज्ञानात्मा प्रकृतिः । · · · · · · · · · अन्नलक्षणः सोमः (५)

९ प्राणात्मा प्रकृतिः—भूताग्निः—महादेवः—(३) इति पञ्चात्मानो ब्रह्मसत्याः ।

(३) [१]अथ शुक्रवर्गे पुनः—

१० शरीरात्मा भूतमयः वाक्छुक्रः

---

**[१] शुक्रस्वरूपमिह विस्तरभिया न व्याख्यातम्, अन्यत्र ब्रह्मविज्ञानादौ द्रष्टव्यम् ।**

११ हंसात्मा वायुमयः अप्शुक्रः
= दिव्यात्मा अग्निमयः अग्निशुक्रः

एष दिव्यात्मा पुनस्त्रिविधः—

१२ १ वैश्वानरात्मा अग्निमयः
१३ २ तैजसात्मा वायुमयः
= ३ प्राज्ञात्मा इन्द्रमयः

एष प्राज्ञात्मा पुनस्त्रिविधः—

१४ १ कर्म्मात्मा ईश्वरजन्मा वासनालक्षणकर्म्ममयः
१५ २ चिदाभासः ईश्वरांशः ज्योतिर्लक्षणज्ञानमयः
= ३ ईश्वरः ईश्वराभिन्नः सर्वशक्तिलक्षणार्थमयः

एष ईश्वरोऽध्यात्मं त्रेधा प्रवर्तते—

१६ १ ऊर्ग्लक्षणः प्राणमयः
१७ २ श्रीलक्षणः वाङ्मयः
१८ ३ विभूतिलक्षणः मनोमयः

अपरे पुनरस्मिन् शुक्रवर्गेऽन्यथाऽऽत्मग्रामं पश्यन्ति । तथा हि—

१ वाग्जन्यः शरीरात्मा भूतमयः ।
२ अब्जन्यः हंसात्मा वायुमयः ।
३ अग्निजन्यः दिव्यात्मा प्राणमयः ।

दिव्यात्मा त्रिविधः—

१ कर्म्मात्मा वासनामयः ईश्वरजन्मा
२ चिदाभासः ज्योतिर्मयः ईश्वरांशः
३ ईश्वरः शक्तिमयः ईश्वराभिन्नः

ईश्वरस्त्रिविधः—

१ प्राणाग्निमयः सप्तलोकशरीरः सत्यात्मा ब्रह्मा ।
२ वागग्निमयः हिरण्यगर्भाश्शरीरः सर्वहुद्यज्ञात्मा विष्णुः ।
३ अन्नादाग्निमयः मर्त्यत्रैलोक्यशरीरः सर्वभूतान्तरात्मा महादेवः ।

ब्रह्मा ऊर्जं प्रवर्तयति ।
विष्णुः श्रियं प्रवर्तयति ।
महादेवो विभूतिं प्रवर्तयति ।

स एष ईश्वरो जीवशरीरावच्छिन्नस्तमेतं जीवात्मानं शक्तिविशेषजनितेन महत्त्वेन संयोजयति । तत्र कस्मिंश्चिज्जीवात्मनि ऊर्ग्भिर्महत्त्वं ददाति, कस्मिंश्चिच्छ्रीभिः, कस्मिंश्चित्प्रभावविशेषैः । तदित्थमेतैरष्टादशभिरात्मभिः षोडशभिर्वा परस्परतोऽन्वाभक्तैरेकोऽयं जीवात्मा संपन्नतमो विज्ञातव्यः ॥

इत्यात्मग्रामनिष्कर्षः ॥

# अथ विषयरहस्ये

## ब्रह्म-कर्मसमीक्षा

मनोमयविज्ञानगर्भितानन्दो विद्या। तद् ब्रह्म, तज्ज्ञानम्। मनोमयप्राणगर्भिता वाग् वीर्य्यम्। तत् कर्म्म, सा क्रिया। ताभ्यामाभ्यां ब्रह्म-कर्म्मभ्यां द्वेधा विभक्तः कश्चिदव्ययो नामैकोऽर्थ आत्मा। योऽसावीश्वरो नामाव्ययो यश्चायं जीवो नामाव्ययः स एष उभयोऽप्यात्मा ब्रह्मकर्म्ममयो द्वैधातव्यो विज्ञातव्यः।।

अपि चाहुः। अव्ययलक्षणं ब्रह्म, तत्र च बुद्धियोगलक्षणं कर्म्म, इत्येतदर्थद्वयमेवैतस्यां भगवद्-गीतोपनिषदि सिद्धान्तरूपेण निरूप्यते। तथा चैतं भगवद्गीतासिद्धान्तमुपपादयितुं ब्रह्मकर्म्मोभयविवेक-लक्षणं विज्ञानं तावत् प्रदर्श्यते।

एके तावदाहुः—ब्रह्म, कर्म्म, अभ्वमिति त्रीणि तत्त्वानि। ब्रह्म ज्ञानम्। कर्म्म क्रिया। अथ यद् दृश्यते, किन्तु नोपपद्यते तदभ्वम्। नामरूपे हीमे अभ्वमित्येकं मतं भवति।।१।।

परे त्वाहुः। ब्रह्मकर्म्मणी द्वे एव तत्त्वे नाभ्वम्। मायामयस्यैतस्याभ्वस्य कर्म्मण्येवान्तर्भावादिति। दिग्देशकालसंख्यातोऽनवच्छिन्नमनन्तमखण्डमनवयवं ब्रह्म। दिग्देशकालतोऽवच्छिन्नं संख्यातोऽनवच्छिन्नं सान्तं खण्डवद्रूपं सावयवं कर्म्म। रसोदयहेतुर्ब्रह्म। बलोदयहेतुः कर्म्म। इति द्वितीयं मतम्।।२।।

अथैतयोरपि ब्रह्मकर्म्मणोः कर्म्मैव तत्त्वमिति श्रमणा आतिष्ठन्ते। तथा हि—कर्म्मैवेदं सर्वं पश्यामः। न ब्रह्म नामातिरिच्यते कश्चिदर्थः। ब्रह्म हि ज्ञानमाहुः। तच्चेदं ज्ञानं कर्म्मविशेषः संभाव्यते।। जानामि न जानामीत्येवमितरक्रियासाधारण्येनाभिनयात्। तदिदं कर्म्म स्वयमकस्मादुत्तिष्ठते, स्वस्मिन् प्रतितिष्ठति। स्वत एव च संतिष्ठते। दुःखं चेदं क्षणिकं स्वलक्षणं शून्यं चेति श्रमणकानां सिद्धान्तः।।

अथैते ब्राह्मणास्त्वाहुः। ब्रह्मैवेदं सर्वं ज्ञानमेव। यदयं घटः पट इति प्रतीमः, यदिदमस्ति नास्तीति प्रतीमः, सर्वोऽप्येष नः प्रत्ययः। तज्ज्ञानम्। तच्च ज्ञाता, ज्ञानं, ज्ञेयमिति त्रिवृत्कृतं रूपं भवतीति कृत्वा यद्यपि ज्ञानात्कथंचित्पृथगेवेदं ज्ञेयं प्रतिपद्यते, तथाप्येषा प्रतिपत्तिर्नूनं ज्ञानमेवोपपद्यते, न ज्ञानात्कर्म्माति-तिरिच्यते।

"ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म्मचोदना।
कारणं कर्म्म कर्तेति त्रिविधः कर्म्मसंग्रहः।।"

इत्येवं ब्रह्मण्येवाहितानां कर्म्मणामभेदेन गीतायामुक्तत्वात्। ज्ञानं तु ब्रह्म। तस्मात् पूर्णं ब्रह्मैवेदं सर्व-मिति ब्रूमः। यत्तु कर्म्मैवेदं शून्यं सर्वं न तु पूर्णं ब्रह्मेत्याहुस्तन्न तथा प्रतीयात्। न हीदमसद्रूपं कर्म्माकस्मा-दुत्थातुं शक्नोति। उत्थितं वा नाकस्माद्विलीयेत, न च कश्चन दृष्टान्तोऽस्ति—यत्रेदमनाश्रयं निराधारं प्रतिष्ठितं कर्म्म दृष्टं स्यादिति।

अथेदं ज्ञानं तु—ज्ञाता, ज्ञानं, ज्ञेयमित्येवं त्रिवृद्रूपं दृश्यते स्वप्नप्रत्ययादौ। तस्माज्ज्ञान-मेवैतदेकं ब्रह्मलक्षणं सर्वमस्तीति जानीयात्—इति हि ब्राह्मणानां सिद्धान्तः। इत्थं ब्रह्मैकान्तिकं कर्म्मैकान्तिकं वा मतद्वयं पृथगिवातिष्ठन्ते।

अथान्ये विद्वांसो महर्षयो ब्राह्मणा अनयोर्ब्रह्मकर्म्मणोर्द्वैतमेवातिष्ठन्ते, ब्रह्म च कर्म्म चेत्युभे ह्येते सनातने विद्यात् । तथा हि—प्रभवप्रतिष्ठापरायणे ब्रह्मशब्दः । किमस्य मूलकारणमिति वक्तव्ये—किमस्य ब्रह्मेत्याहुः । यदिदं दृश्यते किञ्चित्, तस्यैतस्य विश्वस्य किं ब्रह्मेति जिज्ञासायाम्—अमृतं मृत्युमयं ब्रह्म, सदेवासन्मयं ब्रह्मेति भाव्यम् ।

तत्रेदं सदमृतमेव ब्रह्म । मृत्युरयं त्वसदिति कर्म्म नामोच्यते । मृत्योरसत्त्वापेक्षं त्वेकमेवाद्वितीयं सद् ब्रह्मेत्याहुः ।

१—"असन्नेव स भवति, असद् ब्रह्मेति वेद चेत् ।
अस्ति ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" ॥ (तैत्ति० २।६)
२—"यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान" ।
३—"सदेवेदमग्र आसीद्" इति हि सद्वादः श्रूयते ॥१॥
१—"देवानां पूर्व्ये युगे असतः सदजायत" इति ।
२—"देवानां युगे प्रथमे असतः सदजायत" इति ।
३—"असदेवेदमग्र आसीत्, असतो वै सदजायत" इति ।
४—"असद्वा इदमग्र आसीत्, ततो वै सदजायत" इति । (तैत्ति० प० २।७)
५—"असदेव सन् मनोऽकुरुत स्यामिति" इति चायमसद्वादः श्रूयते ॥२॥
१—"असदेवेदमग्र आसीत् । तत् सदासीत् । तत् समभवत् ।"
२—"सतश्च योनिमसतश्च विवः ।"
३—"सतो बन्धुमसति निरविन्दन्" इति वा सदसद्वादः श्रूयते ॥३॥

तथा चैवमादिश्रुतिवाक्यानां सामञ्जस्यान्यथानुपपत्त्या सदसतोरुभयोरेव तयोर्ब्रह्मकर्म्मणोर्विश्वमूलत्वमवधारयामः ॥

अपि च ब्रूमः—ब्रह्म कर्म्मेति द्वे तत्त्वे संहिते तावदयमेकैकोऽर्थः । एते एवोभे अमृतं मृत्युरिति विद्यात् । अमृतमभयं ब्रह्म । मृत्युः कर्म्म ।

"अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम् ।
मृत्युर्विवस्वन्तं वस्ते मृत्योरात्मा विवस्वति" ॥

इति श्रूयते । एते एवोभे विद्या चाविद्या चेति विद्यात् । ब्रह्म विद्या, कर्म्म त्वविद्या नाम ।

"विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" ॥(ईशोप० ११)॥ इति श्रूयते ।

अथैते एव कर्म्म चाकर्म्म चेति विद्यात् । ब्रह्म हि तत्राकर्म्मेष्यते । अकर्म्मणीदं सर्वं कर्म्मोपपद्यते, कर्म्मणि चाकर्म्मेत्याहुः ।

"कर्म्मण्यकर्म्म यः पश्येदकर्म्मणि च कर्म्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्म्मकृत् ॥(भ० गी० ४।१८)
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥(भ० गी० ५।१०)
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥
नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्" ॥(भ० गी० ५।८)

अतिरिक्तं हीदं कर्म्मणः कुर्वद्रूपात् क्षुभ्यमाणादकुर्वद्रूपं नितान्तशान्तं ब्रह्म । तस्मान्नेदं कुरुते, न कारयति—इति ब्रूमः । आत्मा हीदमक्षणं ब्रह्म । तत्रेदमखिलं त्रिक्षणं कर्म्म । यावदिह ज्ञातव्यं किञ्चित्तत् सकलं ब्रह्म । ज्ञानं ब्रह्म । यावदिह वा कर्तव्यं किञ्चित् तत् सकलं कर्म्म । क्रिया कर्म्म । ज्ञानक्रिययोरैकभाव्यमयमेकैकोऽर्थः । नार्थे ज्ञानक्रियाभ्यामतिरिच्यते किंचित् ॥

अपि चेदमपरं बोध्यम्। ब्रह्मैवेदमेकं तत्त्वम्। तदेकं सद् द्वेधा विवर्तते—शान्तं, क्षुब्ध चेति। तत्रैतस्मिन् शान्ते ब्रह्मशब्दः, क्षुब्धे रूपे कर्म्मशब्दः। तदित्थं विशेषतो द्वैविध्येऽपि सामान्यतः खल्विदमेकमेव ब्रह्मेति विद्यात्। तथा हि—

"यदिदं दृश्यते किञ्चित्तद्विद्याद् ब्रह्म कर्म्म च।
कर्म्म क्षुब्धं ब्रह्म शान्तं विश्वं तदुभयान्वयः ॥१॥
अन्योन्यमविनाभूतं प्रतिद्वन्द्वयभिभावकम् ।
सहकारि च सापेक्षं सधर्म्मि च विधर्म्मि च ॥२॥
तारतम्येन तत् कर्म्मयोगाद् ब्रह्म द्विधा विदुः ।
परं ब्रह्मावरं ब्रह्म परं त्वात्मैव स द्विधा ॥३॥
अशेषकर्म्मवद् ब्रह्म परात्परमिति श्रुतम् ।
महामायाकर्म्मभेदावच्छिन्नः षोडशी परः ॥४॥
परमेश्वर इत्युक्तो विश्वातीतः परात्परः ।
तत्रेश्वराः परात्मानः सन्ति षोडशिनोऽमिताः ॥५॥
महामायाकर्म्मभेदावच्छिन्नस्तु परोऽव्ययः ।
परावरोऽक्षरस्तत्र क्षरस्तत्रावरः परः ॥६॥
त्रयोऽमी पुरुषा उक्ता अव्ययश्चाक्षरः क्षरः ।
त्रयस्ते पुरुषा युक्ताः षोडशी पुरुषः परः ॥७॥
आत्मैवेदं परं ब्रह्म सर्वत्राप्तमकर्म्म तत् ।
अथ कर्म्मावरं ब्रह्म तदात्मा च पुरं च तत् ॥८॥
कर्म्मानुबन्धसापेक्षं ब्रह्मेदं त्रिविधं पुनः ।
सृष्टं प्रविष्टमुन्मुक्तं सृष्ट्वाऽनुप्राविशद्धि तत् ॥९॥
ब्रह्म, सृष्टं कर्म्म, कर्म्मचितिव्यष्टयवलम्बनम् ।
प्रविष्टं ब्रह्म तद्विद्याद्यत् समष्टयवलम्बनम् ॥१०॥
कर्म्मातीतं तु यत् कर्म्मोपहितं ब्रह्म भिन्नवत् ।
तदुन्मुक्तमिदं नित्यशुद्धबुद्धं निरञ्जनम् ॥११॥

अथेदं कर्म्मापि द्विविधं तावत् पश्यामः,—चेतनप्रतिष्ठितं जडप्रतिष्ठितं च। तत्र चेतनस्थानां कर्म्मणामुत्थानप्रत्युत्थानप्रतिष्ठानां ज्ञानाधीनतया दर्शनात् तत्सामान्याज्जडकर्म्मणामप्यशेषाणां किञ्चिदलौकिकमहाज्ञानाधीनत्वं प्रतिपद्यामहे। तच्च महाज्ञानं सर्वाधिष्ठातारमेकं चेतनविग्रहं परमात्मानमीश्वरशब्देन व्यपदिशामः। तथा चेदमशेषं कर्म्म क्षुद्रचेतनस्थत्वमहाचेतनस्थत्वाभ्यां द्वेधा विभक्तमुपपद्यते—इत्यशेषाणां कर्म्मणां ज्ञानाधीनत्वं सिद्धं भवति। ज्ञाने च ब्रह्मशब्दः। तस्मात् सर्वं कर्म्मबलप्रतिष्ठितब्रह्माश्रितोदयप्रलयमेवास्तीति ब्रह्मैवेदं सर्वं मन्यामहे। अत एव च "ब्रह्मण्याधाय कर्म्माणीति" गीतोक्तमुपपद्यते। ब्रह्मणि चेदं सर्वं कर्म्मास्तीत्यतः सा ब्रह्मविद्यैव कर्म्मयोग-बुद्धियोग-ज्ञानयोगोपपादनहेतुभूता योगविद्या भवति। सेयं ब्रह्मविद्या योगविद्या चेत्युभयी विद्यैव ब्रह्मशब्दाभिधेया भगवद्गीताशास्त्रार्थः ॥

तत्र सम्यग्ज्ञानं, मिथ्याज्ञानमज्ञानमिति त्रयो ज्ञानस्य विवर्ता भवन्ति। सत्कर्म्म, विकर्म्म, अकर्म्म—इति त्रयः कर्म्मणो विवर्ता जायन्ते। उभयेषां च विवर्तानामन्योन्यतोऽनुग्राह्यानुग्राहकभावः संभवति। यथा तावत् सम्यग्ज्ञानेन मिथ्याज्ञानेनाज्ञानेन चैते त्रयः कर्म्मविवर्ता अनुगृह्यन्ते। याथार्थ्येनैते ज्ञायन्ते, अन्यथा ज्ञायन्ते, न ज्ञायन्ते वा। एवमेव च सत्कर्म्मणा, विकर्म्मणा, अकर्म्मणा चैते त्रयो ज्ञानविवर्ता अनुगृह्यन्ते—सम्यक् संपाद्यन्ते, विरुद्धं ते नीयन्ते, उपेक्ष्यन्ते च। तेषामेषां षण्णां मध्याद्विविच्य

मिथ्याज्ञानाज्ञाने, विकर्म्माकर्म्मणी च परित्याज्यन्ते, सम्यग्ज्ञानं च सत्कर्म्म च संग्राह्यन्ते—इत्येतावानेव सर्वशास्त्रार्थः। सम्यग्ज्ञानं सत्कर्म्म चेत्येते एवोभे श्रेयसे भवतः। तस्मादेते एवोभे ब्रह्मकर्म्मणी गीताया अप्यस्या विज्ञातव्योऽर्थः ॥

**"कर्म्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्म्मणः।**
**अकर्म्मणोपि बोद्धव्यं गहना कर्म्मणो गतिः ॥"**

**इति गीताविषयरहस्ये ब्रह्मकर्म्मसमीक्षा पूर्णा ॥**

# अथ गीता-विषय रहस्ये

## २—त्रियोगनिर्वचने

### गीतोक्तयोगत्रयमूलाख्यानम्

इह हि गीतायां योगशास्त्रे त्रयो योगा उपदिश्यन्ते—कर्म्मयोगो भक्तियोगो ज्ञानयोग इति। ते चैते त्रयोऽपि योगा वैदिका द्रष्टव्याः, त्रिषु वेदशास्त्रप्रकरणेषु पृथक्त्वेनैषां त्रयाणामुपदिष्टत्वात्। तथा हि—

असंदिग्धार्थं विदिताशेषवेदितव्यं विज्ञानशास्त्रं वेदः। परीक्षकस्य याथार्थ्यद्रष्टुर्दृष्टं विज्ञानं विज्ञानोपदेशकवाक्यं च वेदः। ब्रह्म च ब्राह्मणं चेति वेदग्रन्थो द्विविधः। तत्र मन्त्रभागो ब्रह्म, ब्रह्मतात्पर्य्यानुवर्णनं ब्राह्मणम्। तद् त्रेधा विभज्यते—विधिः, आरण्यकम्, उपनिषच्चेति। कर्म्मकाण्डं विधिः, उपासनाकाण्डमारण्यकम्, ज्ञानकाण्डमुपनिषत्। एतैरेव त्रिभिः प्रकरणैरुपदिष्टास्ते त्रयो योगाः। तत्र त्रैगुण्यविषयागृहिभ्यः कर्म्मोपदेशाः कर्म्मविधयः। अथ सगुणविद्योपदेशो निर्गुणविद्योपदेशभूमिकारूपो वानप्रस्थजीवनयात्रानुकूलात्मविचारोपयोग आरण्यकम्। निर्गुणविद्योपदेशः सगुणविद्योपदेशमूलक उपनिषत्। तदित्थमुपासनाज्ञानयोः कथंचिद् भेदसत्त्वाद्विदुषां समाजे निष्ठात्रैविध्योपपत्तावपि विद्योपदेशत्वसामान्यादनयोरारण्यकोपनिषदोरैतरेयबृहदारण्यकादिश्रुतिषु सांकर्य्येणैव प्रायो व्यवहारदर्शनाच्च साधारणजनताप्रतिपत्त्यनुरोधेन निष्ठाद्वैविध्यं भगवानाह—

**"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।**
**ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम्"** ३।३। इति।

तत्र कर्म्मयोगसमुच्चितज्ञानयोगरूपाया अस्या भक्तियोगनिष्ठाया अप्यस्यां ज्ञानयोगनिष्ठायामेवोपसंग्रहो द्रष्टव्यः॥ तदित्थं वेदोपदेशत्रैविध्यात् त्रित्वेनैवोपपन्नानामप्येषां योगानां बुद्धियोगायोगाभ्यां द्वैविध्यं भगवानपेक्षते। तत्रापि च बुद्धया युक्तास्ते त्रयोऽपि योगा उपादेया इष्यन्ते। अबुद्धियुक्तास्तु त्रयोऽप्येते विगर्हन्ते। यद्यपि सर्वेऽप्येते योगा बुद्धियुक्ता एव संभाव्यन्ते, प्रेक्षापूर्वकारिभिरेवैषां विधेयत्वात्। तथाप्यत्र बुद्धेर्द्वैविध्यं द्रष्टव्यम्। विद्याबुद्धिरविद्याबुद्धिश्चेति। व्यवसायात्मिका बुद्धिर्विद्या। अव्यवसायात्मिका त्वविद्या। दृढप्रत्ययरूपा निश्चितैकार्था निःसंदिग्धा व्यवसायबुद्धिः सा विद्या। बहुशाखा ह्यनन्ता अनिश्चितनानार्था संशयावहा त्वव्यवसायबुद्धिरविद्या। अज्ञानावृतज्ञानं ज्ञानाल्पत्वादविद्या। यावदेव त्वत्राज्ञानसंपर्कस्ततः कर्म्मबन्धो भवति—इत्यविद्या तावदात्मबलापघाताय कल्पते। तस्मादविद्यायुक्ताः कर्म्मयोग-ज्ञानयोग-भक्तियोगा उपेक्ष्याः। बुद्धियुक्तास्तु त्रयोऽप्येते श्रेयसे भवन्तीति भगवतः सिद्धान्तः॥

तत्र तावदविद्याबुद्धिश्चतुर्धा—अभिनिवेशः, अज्ञानं, रागद्वेषौ, अस्मिता चेति। अतद्धर्मिणि तद्धर्म्मप्रत्यये याथार्थ्याभिमानेनास्थाधारणमभिनिवेशः। अभिनिवेशादतद्धर्म्मणि तमसा बुद्धिं कर्म्मं

बध्नाति ॥ १ ॥ कार्य्यत्वकारणत्वाभ्यामर्थानामग्रहणमज्ञानम् । अज्ञानेन तमो बुद्धिमावृणुते ॥२॥ अथ प्रवृत्तिहेतुः कामानुशयी रागः, निवृत्तिहेतुः क्रोधानुशयी द्वेषः। तावेतौ रागद्वेषौ प्रज्ञानमग्रतः पृष्ठतश्चाकर्षन्तौ समस्थानात् प्रच्यावयतः, अशान्त्या क्षोभेण बुद्धिमाकुलयतः ॥३॥ अथ बालक-भूताविष्ट-ग्रामीण-पामरादिवत् प्रज्ञानस्याविकासो मौढ्यमस्मिता। तया चात्मप्राणस्यार्कविधस्य स्फुरणाभावात् सतोऽप्यात्मबलस्य कार्य्यकारिता प्रतिबद्धयते, स्वज्योतिःप्रतिबन्धाच्चायमात्मा तमसा ऽऽव्रियते ॥४॥ त एते चत्वारः कर्म्मदोषा विद्यामवपातयन्तीत्यविद्या नामोच्यते। अविद्यासन्नियोगात्तु क्रियमाणाः कर्म्मयोग-ज्ञानयोग-भक्तियोगा नात्यन्तं श्रेयसे भवन्तीत्यवश्यमेतेषु विद्याबुद्धियोगोऽपेक्ष्यते।

सोऽयं विद्याबुद्धियोगोऽपि चतुर्धा—धर्म्मः, ज्ञानम्, वैराग्यम्, ऐश्वर्य्यं चेति। धर्म्मादभिनिवेशस्य, ज्ञानादज्ञानस्य, वैराग्याद्रागद्वेषयोः, ऐश्वर्य्यादस्मिताया निवृत्तिर्भवतीत्यनावरणोऽयमात्मा तमसो ज्योतिर्गच्छति, मृत्योरमृतं गच्छति, असतः सद् गच्छति। तथा चेयमेतावती सिद्धिर्विद्याबुद्धियोगादुपपद्यते। तस्माद् बुद्धियोगमय एवायं ज्ञानयोगः कर्म्मयोगो भक्तियोगो वा वर्तयितव्य इत्यादेष्टुमिदं गीताशास्त्रं प्रवर्तते।

तत्रैतस्मिन् गीतानिबन्धे तावदादौ अष्टाभिरुपनिषद्भिरस्य ज्ञानयोग-भक्तियोग-कर्म्मयोगानां परिष्कारहेतोर्बुद्धियोगस्यापूर्वं स्वरूपं विस्पष्टमाख्यातम्। अथातः परं प्राचीनैः पारोवर्य्यविद्भिरुपदिष्टानामेषां ज्ञानयोग-भक्तियोग-कर्म्मयोगानां संक्षेपतो विवक्षितानि रूपाणि दर्श्यन्ते।

**इति योगत्रयमूलाख्यानम्।**

# अथ विषयरहस्ये

## कर्म्मयोगसमीक्षा

तत्रादौ कर्म्मयोगः समीक्ष्यते—प्रवृत्तानां वैदिकानां रमणीयानां च लौकिकानां यथाधिकारविहितानां कर्म्मणां यथाधिकारं यथाकामं चाचरणं कर्म्मयोगः। यावन्ति खलु यज्ञादीनि कर्म्माणि समिदाज्य-वेदि-बर्हिः-पुरोडाशादिरूपात्साधनतः शत्रुक्षय-रायस्पोषान्नयशः-श्री-प्रजा-सुखविशेषादिरूपात्फलतश्चैहलौकिकान्पारलौकिकान्वा विषय-सुख-भोगौपयिकानर्थानपेक्षन्ते, आधिभौतिकाधिदैविकैरेव साधनैः कल्प्यमानानि कर्म्माणि पुनराधिभौतिकाधिदैविकसुखभोगौपयिकानेव संस्कारविशेषान् प्रजनयन्ति, तेषां कर्म्मणामुपसंग्रहणमनुशासनं च कर्म्मकाण्डम्। तत्र व्यावहारिका एव कर्म्मकलापा उपदिश्यन्ते। कर्म्मणां च तेषामधिकारविशेषसापेक्षत्वात्कर्म्मभेदेन तत्र बहुविधाभिरेव मर्य्यादाभिर्नियन्त्रिता भिन्नभिन्नाधिकारिणो व्यवस्थाप्यन्ते। सेयं व्यवस्था द्विविधा—चातुर्वर्ण्यं चातुराश्रम्यं च।

**महारम्भाणां कर्म्मणां चातुर्वर्ण्यचातुराश्रम्यव्यवस्थासापेक्षत्वम्।**

कर्तृविभागेन कार्य्यविभागव्यवस्थापेक्षं हीदमुभयं चातुर्वर्ण्यं चातुराश्रम्यं च। यत्र परस्परात्यन्तविरुद्धानेककर्म्मकलापसमुच्चयरूपं किञ्चिदेकं महारम्भं कर्म्म कर्तुमिष्यते, तत्रैकेन तस्य कर्तुमशक्यत्वे व्यवस्थाविशेषमेवैतत्साधनोपायं पश्यन्ति, महाकर्म्मारम्भकाणि सर्वाणि कर्म्माणि विभज्य तेष्वेकैकं महार्थं कर्म्मानेकपुरुषा एककालमेव समुच्चित्य संपादयेयुरित्येका व्यवस्था। सेयं चातुर्वर्ण्यपद्धतिः। एकपुरुषः कालभेदं प्रकल्प्यान्योन्यविरुद्धान्यपि नाना कर्म्माणि संपादयेदिति द्वितीया व्यवस्था। सेयं चातुराश्रम्यपद्धतिः। सेयं व्यवस्थाद्वयी जगत्प्रकृतिसिद्धा निर्विशेषं सर्वत्र लोके दृश्यते।

### चातुर्वर्ण्य-चातुराश्रम्यव्यवस्थापेक्षितायाः सर्वजगत्प्रकृतिसिद्धत्वम्

तथा हि—यथा प्रतिपुरुषं मनो-वाक्-प्राणकर्म्मणामुद्बोधकं प्रतिशरीराग्निबलं भवति। यज्ञकर्म्मसु तावच्चत्वारोऽग्नयः परस्परतोऽपेक्ष्यन्ते—अध्यात्म[1]मधिभूत[2]मधिदैवत[3]मधियज्ञं[4] च। तत्र याज्ञिके वैधाग्नौ यजमानशारीराग्नेरग्न्याधानकर्म्मणा संधानं कृत्वा तत्र समिद्धविर्द्रव्यादिभिर्भौतिकाग्नेः संधानपूर्वकं वैदिकमन्त्रविशेषैराधिदैविकाग्नेः संधानं क्रियते। तथा चैषां चतुर्णामग्नीनामेकीभावेनप्रत्यग्निनिगूढानां वाक्-प्राण-मनःकर्म्मणां सजातीयानुबन्धनेनैकीभावः संपाद्यते। तत्र चतुर्णां मनसामेकीभावाय यजमानश्च ब्रह्मा च, चतुर्णां प्राणानामेकीभावाय यजमानश्चाध्वर्य्युश्च, चतसृणां वाचामेकीभावाय यजमानश्चाध्वर्य्युर्होतोद्गाता च नियुज्यन्ते। अध्वर्युर्यजुर्भिर्होता ऋग्भिरुद्गाता सामभिराधिदैविकवाचोऽनुगृह्णाना यजमानाग्निं वाचि संदधते। न चैतानि सर्वाणि कर्म्माण्येको यजमानः शक्नोति कर्तुम्। अतो लौकिकतत्तन्महोत्सवादिवदिहापि कर्तृविभागेन कार्य्यविभागं प्रकल्प्यैतन् महारम्भं कर्म्म संपादयितुमीष्टे। एवमयमेको जगद्धर्म्मप्रवर्तको मनुर्वा मनुप्रवर्तितसमाजबन्धनरूपैकधर्म्मप्रवर्तकः सर्वसमाजैकरक्षको धर्म्मसम्राड् वा समाजे वीर्य्यं संसाधयितुं वेदमनुसृत्य कर्तृविभागेन कार्य्यविभागं प्रकल्प्य सामाजिकं बलं संपादयितुमीष्टे स्म। तथा चैकं समाजं मनुष्यैकव्यक्तिवदेकत्वेनाध्यवसाय तस्य

चतुर्धा मनुष्यविभागैर्मुखबाहूदरपादान् वीर्य्यचतुष्टयाधिष्ठानभूतान् विभज्य तत्र तत्र तत्तद्वीर्य्यं संपाद्य तं समाजं वीर्य्यवन्तं संपादयामास।

यत्र पुनरेतच्चातुर्वर्ण्यमयी व्यवस्था नास्ति, स समाजो निर्वीर्य्यः पापीयान् भवति, गर्ते पतति। सर्वस्मिन्नपि भूमण्डले प्रबलः कोऽपि तादृशः समाजो न दृश्यते, यत्रैतच्चातुर्वर्ण्यव्यवस्था न स्यात्, यावदेव च तत्र समाजे चातुर्वर्ण्यव्यवस्थाया निजधर्म्मत्वाभिमानसंपत्तये राजकीयनियमेन व्यवस्थादाढर्च्यं व्यवतिष्ठते, तावदेव चैतत् समाजबलमप्युद्रिच्यते। "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः"इति सिद्धान्ताद् दृढधर्म्मतया धृतानामेव वीर्य्याणां समाजोन्नतिहेतुत्वात्, "धर्म्मो रक्षति रक्षितः" इत्यव्याहतनियमदर्शनात्। प्रत्यक्षं हि प्रतिशरीरं पश्यामश्चतुर्णां वीर्य्याणां धर्म्मभूतानां पुरुषसंरक्षकत्वम्, तद्वदस्य सामाजिकपुरुषस्याप्येतान्येव वीर्य्याणि धर्म्मभूतानि रक्षकाणि भवन्ति॥

तथा हि चातुर्वर्ण्यव्यवस्थासाध्यानि वीर्य्याणि चतुर्विधान्येवोपपद्यन्ते, तथा च—दिव्य-वीर-पशु-मृतभावप्रयोजकानां ब्रह्म-क्षत्र-विट्-शूद्रशब्दानां चतुर्णां वीर्य्याणां विभज्य संसाधनं चातुर्वर्ण्यम्। तत्र तावच्चातुर्वर्ण्योचितानि कानिचित् कर्म्माणि दैवसंस्कारसाध्यात्मवीर्य्यप्राप्तिसाधनसापेक्षाणि भवन्ति। न चैकः सर्वाण्येतानि वीर्य्याणि साकमाराधयितुं समर्थयते, उपकार्य्योपकारकभावेन परस्परात्यन्तसापेक्षाणामप्येषां स्वरूपतो विभिन्नच्छन्दस्कदेवसंस्कारसाधनतश्चात्यन्तविरुद्धत्वात्। अनियमेन तु यथाकथंचिदव्यवस्थया प्रवर्तमानानां साधकानां तत्तद्वीर्य्यसंसाधने कर्म्मबलं नोपपद्यते। तस्मान्न केवलं व्यक्तिविभागेन, अपि तु कुलविभागेन कार्य्यविभागं प्रकल्प्य प्रवर्तमानानां तत्तत्कर्म्मसंसिद्धावनायासः सौकर्य्यं च भवति। निजधर्म्मत्वाभिमानदाढर्च्यं चास्य कुलक्रमानुवर्तनादेवोपपद्यते, न व्यक्तिविशेषपरिग्रहमात्रेण। तस्मादेतद्वीर्य्यसंसाधनं कुलक्रमानुगतमेव कुलधर्म्मतया धार्य्यमिति विदुषां दूरदर्शिनां सिद्धान्तः॥

चातुराश्राम्यं त्वितो भिद्यन्ते। तथा हि—एक एव हि पुरुषो विरुद्धान्यप्यनेकविधानि कर्म्माणि समय भेदेन कर्त्तुं शक्नोतीति समयविभागेन कार्य्यविभागेव्यवस्थापेक्षं चातुराश्रम्यम्। कर्म्म च ज्ञानं चेति द्वे शक्ती वीर्य्योपेते ईश्वररूपे भवतः। तेनेश्वरमारिराधयिषुरेष शतायुःपुरुषः पूर्व्वेण वयसा कर्म्मशक्तौ वीर्य्यमुपार्जयन्, उत्तरेण वयसा ज्ञानशक्तौ वीर्य्यमुपार्जयेत्। तेनेश्वरो वीर्य्यलक्षणः सर्वात्मनाऽनुगृहीतो भवति। किन्तु न ज्ञानेन विना कर्म्मणि वीर्य्यमुपार्जयितुं शक्यम्। अन्योन्याश्रिते हि ते न सत्रा संसाधयितुं शक्येते। तस्मात् पूर्वं च वयो द्वेधा विभज्यते, उत्तरं च।

तेनैतज्जन्मत आरभ्य पञ्चविंशतिवर्षपर्य्यन्तं ब्रह्मचर्य्यं भवति। तत्र कर्म्माणि कर्तुं दीक्षालाभाय कर्म्मसाधनोपायभूतज्ञानसाधनं कुर्य्यात्। ऋत्वर्थं हि तस्यैतज्ज्ञानं संपद्यते।

अथैतदूर्ध्वं पुनरपराणि पञ्चविंशतिं वर्षाणि तत्पूर्वसाधितज्ञानसाध्यं तथाविधं कर्म्म कुर्य्यात्, यत्कर्म्मदीक्षितः स्यात्। पुरुषार्थहेतुर्हि तस्यैतत्कर्म्म निष्कृष्यते। उक्तं चाभियुक्तैः—

**"आहारार्थं कर्म्म कुर्य्यादनिन्द्यं तच्चाहार्य्यं प्राणसंधारणार्थम्।**
**प्राणा धार्य्यास्तत्त्वजिज्ञासनार्थं तत्त्वं ज्ञेयं येन दुःखं न भूयः॥"**

धर्मार्थकाममोक्षाः पुरुषार्थाः। धर्म्मार्थौ साधने। काममोक्षौ साध्यौ। धर्म्मादर्थश्च कामश्च मोक्षश्च। अर्थतस्तु कामश्च मोक्षसाधनं धर्म्मश्च। न चैतदर्थेन मोक्षः सम्पद्यते। कामो द्विविधः—ऐहिकं विषयसुखम्। आमुष्मिकं स्वर्गसुखम्। मोक्षस्तु निःश्रेयससुखं ताभ्यामतिरिच्यते। स च मोक्षोऽकामस्यैवोपपद्यते। धर्म्माच्चैतानि सिद्धचन्ति। आत्मनि कर्म्मजन्योऽतिशयो वासना धर्म्मः। सोऽपि कर्म्मजन्यत्वात्कर्म्मोच्यते। इहामुत्र भोगसाधनमात्मन्युप्तं बीजरूपं वासना कर्म्म।

विद्यावशाद्वा स्वरुचिवशाद्वाऽहर्निशं यथाकथंचित् कर्म्मसु व्यासज्जमानैः प्राणिभिः क्रियमाणानां कर्म्मणां शुभानामशुभानां वाऽवश्यं कश्चिदुदर्को निष्पद्य कर्तुरात्मन्यासज्जते, तदिदं वासनाकर्म्म। तत्राशुभोदर्को मा भूदिति शुभोदर्कायाचार्य्या आदिशन्ति—

६

"ज्ञात्वा कर्म्माणि कुर्वीत नाज्ञात्वा किञ्चिदाचरेत्।
अज्ञानेन प्रवृत्तानां स्खलनं स्यात् पदे पदे" ॥ इति ॥

तत्रैहिकं विषयभोगसुखमामुष्मिकं च पितृस्वर्गसुखं देवस्वर्गसुखं वा कामयमानस्य ज्ञात्वा ज्ञात्वा तज्ज्ञानकर्म्मानुष्ठानं वयसः पूर्वपक्षः। अथ वयसः पुनरुत्तरपक्षे–ऐहिकं वाऽऽमुष्मिकं वा कर्म्म निष्कामं कृत्वा कृत्वा ज्ञानमेवोपासीत। तथा हि—पुत्रेभ्यो गृहधर्म्मान् समर्पयन्नदारः सदारो वा गृहधर्म्मेभ्यो विरज्य ज्ञानसाधनोपायभूतं कर्म्म कर्तुमयं वनं पञ्चाशतो व्रजेत्। तत्र पञ्चविंशति वर्षाणि ज्ञाने दीक्षा-लाभाय ज्ञानौपयिकानां निवृत्तिकर्म्मणां साधनेन कर्म्मबलं निवर्तयेत्, सा तपश्चर्य्या भवति। ज्ञान-दीक्षितः पुनरयं कर्म्मफलत्यागलक्षणां संन्यासनिष्ठामात्मनि भावयेत्। तत्र चेदं कर्म्म क्रत्वर्थं भवति। ज्ञानं पुनरस्य पुरुषार्थहेतुः संपद्यते। आत्मज्ञानाच्च परमा शान्तिर्निःश्रेयसं नाम निरतिशयं सुखमाप्यते। तदिदमेकस्य पुरुषस्य समयभेदेन कर्तव्यभेदोपपादनं चातुराश्रम्यं भवति। तानीमानि चातुराश्रम्योप-पादकानि कानिचित्कर्म्माणि पृथग्भाव्यानि ॥

## अथोदर्कनिबन्धनानि षट् कर्म्माणि

उदर्कः कर्म्मफलं शुभमशुभं चेति। तद्भेदादेवैतत्कर्म्मापि द्विविधमुच्यते—पुण्यं च पापं चेति। श्वोवसीयसं पुण्यम्। पातकं पापम्। तयोरुभयोस्त्रैविध्यात्कर्म्मणां षट्त्वमुपपद्यते। तद्यथा—

१–अभ्युदयजनकं सत्कर्म्म। तच्छ्रेयः सुकृतं वा नाम। तत्पुण्यम्।
२–प्रत्यवायजनकं विकर्म्म। तदेनो नाम। तत्पापम्।
३–अभ्युदयविघातकं विकर्म्म। तदघं नाम। तत्पापम्।
४–प्रत्यवायविघातकं सत्कर्म्म। प्रायश्चित्तं नाम। तत्पुण्यम्।
५–अभ्युदयनिमित्तप्रतिबन्धकम्-अकर्म्म। किल्विषं नाम। तत्पापम्।
६–प्रत्यवायनिमित्तप्रतिबन्धकं शान्तिस्वस्त्ययनं नाम सत्कर्म्म। तत्पुण्यम्।

अत्रायमभिसन्धिः—"सूर्य्य आत्मा जगतस्तस्थुषश्च" यजु० १३।२, इति श्रुतेः सूर्य्य-रसानां ज्योतिर्गौरायुरित्येतेषां त्रयाणां मध्यादायुषः सर्वजीवात्मत्वं पश्यन्ति। स इन्द्रः प्राणः प्रज्ञात्मा। "तं मामायुरमृतमित्युपास्स्व" इतीन्द्रवाक्यं कौषीतकश्रुतिराह। तस्यैतस्य जीवात्मनः प्राज्ञस्य भूतात्मनः स्वप्रभवसूर्य्याभिमुख्येनोर्ध्वमयनमभ्युदयः। अथ वैपरीत्ये प्रति-शब्दः। सूर्य्याभिमुख्य-विपरीतं त्ववस्तादात्मनोऽयनं प्रत्यवायः। अभ्युदयेन जीवतः प्रतिक्षणं सूर्य्यादात्मरसस्याधिकाधिक-लाभेन श्रीवृद्धिः, शरीरत्यागादूर्ध्वं चात्मनः सूर्य्याभिमुखी गतिरुपपद्यते। तद्विपरीतेन तु प्रत्यवायेन जीवतः प्रतिक्षणं सूर्य्यविप्रकर्षादात्मरसक्षयतः श्रीहानिः, शरीरत्यागान्ते पुनरात्मनः शनैश्च-राख्ययमराजाभिमुखी गतिरापद्यते। एतयोरुभयोरभ्युदय-प्रत्यवायसंज्ञयोर्गतिविशेषयोः कर्म्मविशेष-जनितो भूतात्मनि वासनासंस्कारो हेतुः। तत्राभ्युदयवासनायां श्वःश्रेयसशब्दः, पुण्यशब्दः। अथ प्रत्यवायवासनायां पातकशब्दः, पापशब्दः। अथाभ्युदयवासनाविघातकमघं नाम पातकं भवति। पात-कत्वाच्च तत्पापम्। एवं प्रत्यवायवासनाविघातकं प्रायश्चित्तं नाम। प्रायः प्रगतो विनष्टः शुभधर्म्मः, तस्य पुनश्चयनं प्रायश्चित्तम्। अथाभ्युदयनिमित्तप्रतिबन्धकं किल्विषम्। प्रत्यवायनिमित्तप्रतिबन्धकं तु शान्तिस्वस्त्ययनं नाम। तत्राभ्युदयप्रवर्तकं प्रत्यवायनिवर्तकं प्रत्यवायनिमित्तनिवर्तकं चेति त्रीणि पुण्यानि कर्म्माणि। इतराणि पुनस्त्रीणि पापानि। शुभफलोदयौपयिकः संस्कारस्तावदात्मनः कला, कलामर्हति कल्यम्। अथवा अस्तमनात्पश्चात्पुनरुदयनं कल्यम्। तदिदमुभयविधं कल्यं यज्जीवनम्, तदिदं परिपोषयत्पुनः पुनरुत्थानवच्च सत्कल्याणम्। नस्य णत्वं लवणादिवत्। अपि वा राज्ञे देयो भागः करः, तमर्हति कर्य्यम्। तथा च धनागमयुक्तं जीवनं कर्य्याणम्, तदेव च कल्याणं रलयोरभेदाध्यवसायात्। कल्याणं पुण्यमित्येकोऽर्थः। तद्विरुद्धमभद्रं पापम्, पा रक्षणे धातुः। पा-रक्षा-स्वास्थ्यम्, स्वरूपेण स्वभावेन

चात्मनः स्थितिः। ततोऽपगमः पापम्। अपगमार्थोऽयमपशब्दः। यद्वा पामात्मरक्षकं न पाति—न रक्षतीत्यात्मस्वरूपधर्म्मव्यापादकं कर्म्म पापं नाम। यद्वा अपगता निकृष्टदशापन्ना आपः—स्वात्मजीवन-प्रवाहः—अपापम्। यादृच्छिकान्मूलस्थितिविलोपसूचकात्तदकारलोपात्पापम्। यद्वा आत्मनः प्रकृतिरापः, अद्भ्यो ह्रीदं भोगायतनं लिङ्गशरीरमुत्पद्यते—तस्मात्तदापो नाम। अपशब्दो नीचैर्वचनः। अधोगति-वशात्पतितं भोगशरीरं यस्मात्तत्कर्म्म पापम्। अत्राप्यपापमिति प्राप्ते प्रथमाकारलोपश्चिरन्तनव्यव-हारविशेषादिति बोध्यम्॥

तदित्थमुदयनीयपतनीयभेदात्कर्म्मणो द्वैविध्यमेव सिद्धान्तः। परे तु पतनीयस्य कर्म्मणो वीर्य्यतारतम्याद् द्वैविध्यमिच्छन्ति। तथा चेदं कर्म्म त्रिविधं निष्पद्यते—सत्कर्म्म, विकर्म्म, अकर्म्मेति। अभ्युदयजनकं प्रत्यवायविनाशकं च सत्कर्म्म। प्रत्यवायजनकम्, अभ्युदयविनाशकम् च विकर्म्म। अभ्युदयनिमित्तप्रतिबन्धकं त्वकर्म्मेति। एतदेव त्रैविध्यं भगवाननुजानीते। तथा चाह—

"कर्म्मणोह्यपि बोद्धव्यं बोद्धव्यं च विकर्म्मणः।
अकर्म्मणोऽपि बोद्धव्यं गहना कर्म्मणो गतिः"॥ इति॥

## अथात्मनिबन्धनानि षट् कर्म्माणि।

तथा हि। विद्या च कर्म्म चेति द्वौ आत्मधातू भवतः। वेदशास्त्रपरिशीलनसिद्धं ब्रह्माश्वत्थ-विज्ञानं विद्या। प्राक्तनकर्म्मजनितवासनासंस्कारमयकर्म्माश्वत्थजनितरुचिविशेषोदयः कर्म्म। वेदाज्ञानिबन्धनं स्वरुचिविशेषनिबन्धनं च कर्म्म कुर्वाणा इह सर्वे लोका दृश्यन्ते। तथा चैषां सर्वं कर्म्म द्वेधा विभक्तं भवति—वैदिकं च लौकिकं चेति। विद्यासापेक्षमाज्ञासिद्धमीश्वरविज्ञानोपेतं वैदिकम्। तदिदमाज्ञाविशेषनिबन्धनत्वात्स्वरुचिविशेषमनपेक्ष्यैव कार्य्यकारणभावसापेक्षकर्तव्यताबुद्ध्या क्रियते। अथ विद्यानिरपेक्षं तु स्वरुचिसिद्धमिन्द्रियप्रज्ञानोपेतं लौकिकम्। तच्च व्यक्तिविशेषोपकार-समाजोपकारादिसाधुत्वदृष्टिनिबन्धनकर्तव्यताबुद्ध्या क्रियते।

तत्रेदं वैदिकं त्रिविधम्—यज्ञः, तपः, दानं चेति। आधिदैविकाधिभौतिकाध्यात्मिकानामग्नीनां प्रकारविशेषेणैकीभावं संपाद्य आध्यात्मिकाग्नौ वाक्प्राणमनसां बलातिरेकसंपादनं यज्ञः। तदिदं कर्म्माध्यात्मं तावदन्नाधानप्रकारविशेषात्संपाद्यते। अथ चानशनादिभिः क्षुब्धस्याध्यात्मिकाग्नेः स्वैरेव शरीरधातुभिः प्रत्यर्पितैर्बलातिरेको यत्र संपाद्यते तत्तपः। यथा क्षेत्रे बीजं वपन्नधिकं सस्यं प्रजनयति, यथा वा व्यायामादिश्रमं कुर्वाणः शारीरबलं क्षपयन्बलातिरेकं संपादयति, एवं शरीरधातुभिरेवाग्नौ हुतैरधिकाधिकमात्मबलं प्रजनयति, तत्कर्म्म तपः। श्रूयते च—"एतद्वै तप इत्याहुर्य्यत्स्वं ददातीति" अथ यत्रात्मानमदत्वाप्यात्मीयं बाह्यं वित्तं ददाति तद्दानम्। तत्रेदं वित्तं यस्मै प्राणिने ददामि, तत्रात्मनि ममायमात्मा स्ववित्ताहितात्मभागाधानद्वारा प्रविष्टः सन्विभवति, भूमानं गत्वा बलवान्भवति। अस्ति च मदीये वित्ते ममतासंबन्धादनुस्यूतो ममात्मा। श्रूयते हि—

"एतावान् खलु वै पुरुषो यावदस्य वित्तम्" (तै० ब्रा० १।४।७।) इति।

"यावद् वित्तं तावदात्मा" (शत०) इति च।

तदित्थं सौरप्राणानुगतोपचारं परोक्षफलोदर्कं कर्म्मत्रयं विज्ञानविशेषसंबन्धात् क्रियमाणं वैदिकम्। तस्य त्रिविधस्यावश्यकत्वमाह गीतायाम्—

**"यज्ञो दानं तपःकर्म्म न त्याज्यं कार्य्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्॥१८।५।
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥१८।६।" इति**

अथेदं लौकिकमपि कर्म्म द्वैविध्येन विभज्यते–रमणीयचरणं कपूयचरणं चेति। तत्राविहित-

मविद्यामूलकत्वादथ निषिद्धमविद्याजनकत्वाच्चात्यन्तं हेयमित्युपेक्ष्यते, अविद्यासंबद्धानां कर्म्मणामनिष्ट-जनकत्वात्। अथ विद्यानिरपेक्षाणामप्यविद्यागन्धशून्यत्वे कर्तव्यता न निषिध्यते। अवैदिकानामपि कर्म्मणां लोकरुचिसिद्धानां समाजहितावहत्वेन व्यक्तिहितकारित्वेन चेष्टत्वात्। तदिदं लौकिकं शुभ-कर्म्म त्रिविधम्—इष्टम्, आपूर्त्तम्, दत्तं च।

"अध्यात्मदेवतापुष्ट्यै यत् कर्म्म विधिवत् कृतम्।
वाचा प्राणेन मनसा तदिष्टमभिधीयते ॥१॥
अग्निहोत्रं तपः सत्यं देवानाञ्चानुपालनम्।
आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥२॥
सर्वसाधारणार्थाय प्रवर्तयति यश्चिरम्।
बहुद्रव्यव्ययापेक्षं कर्म्म तत्पूर्तमुच्यते ॥३॥
वापीकूपतडागादि देवतायतनानि च।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥४॥
वाटशालां पाठशालां मठं शीतेऽनलं प्रपाम्।
वाटं वाटी मन्नसत्रं कुल्यां वाटद्रुमांस्तथा ॥५॥
पण्यशालां च भैषज्यशालां पुस्तकशालिकाम्।
नौकां सेतुं घट्टबन्धं कुर्यात् पूर्तं वदन्ति तत् ॥६॥
बहिर्वेदि तु यद्दानं तद्दत्तमभिधीयते।
शरणागतसंत्राणं भूतानां चाप्यहिंसनम् ॥७॥
ससाधनं सोपभोगं स्वमर्थं यः समर्पयेत्।
परस्मै तद्दरिद्राय तद्दत्तमिति कथ्यते ॥८॥
भूमिं सुवर्णं गां वस्त्रमुत्थानं पुस्तकं गृहम्।
औषधं भोजनं दद्यात्तद्दत्तमिति कथ्यते ॥९॥"

तत्रैतेषु लौकिकेषु त्रिषु कर्म्मसु स्वरसत एव सर्वे लोकाः प्रवृत्ता दृश्यन्ते। सामाजिकोपकारस्य स्वरुचिविशेषस्य च प्रवृत्तिनिमित्तस्याविशेषं मनुष्यमात्रे प्रत्युपस्थानात्, त्रयाणामप्येषां कर्म्मणां विद्यानपेक्षित्वादाविद्वत्कुलमापामरं च सर्वेषां मनुष्याणामविशेषेणाधिकारोपपत्तेश्च।

अथ वैदिकेषु त्रिषु कर्म्मसु विद्यासापेक्षत्वाद्विदुषामेवाधिकारः संभवति; नाविदुषाम्। तेषां वैज्ञानिकत्वादज्ञानेन प्रवृत्तानां तेषां यथावत्कर्म्मकरणासमर्थतया कर्म्मफलानुदयेन श्रद्धाविघातात्तत एव प्रवृत्तिनिमित्तस्य स्वरुचिविशेषस्यापलापाच्च। तथा हि—श्रूयतेऽयमर्थो वाजिश्रुतौ—

"स ये हाग्र ईजिरे—ते ह स्मावमर्शं यजन्ते। ते पापीयांस आसुः। अथ ये नेजिरे—ते श्रेयांस आसुः। ततोऽश्रद्धा मनुष्यान्विवेद—ये यजन्ते पापीयांसस्ते भवन्ति, य उ न यजन्ते श्रेयांसस्ते भवन्तीति। तत इतो देवान् हविर्न जगाम। इतः प्रदानाद्धि देवा उपजीवन्ति। ते ह देवा ऊचुः, बृहस्पति-माङ्गिरसम्—अश्रद्धा वै मनुष्यानविदत्, तेभ्यो विधेहि यज्ञम्-इति। स हेत्योवाच बृहस्पति-राङ्गिरसः, कथा न यजध्व—इति। ते होचुः—किंकाम्या यजेमहि? ये यजन्ते पापीयांसस्ते भवन्ति, य उ न यजन्ते—श्रेयांसस्ते भवन्तीति। स होवाच—बृहस्पतिराङ्गिरसः—यद्वै शुश्रुम देवानां परिषूतं तदेष यज्ञो भवति—यच्छृतानि हवींषि, क्लृप्ता वेदिः। तेनावमर्शमचारिष्ट तस्मात् पापीयांसोऽभूत। तेनानवमर्शं यजध्वम्, तथा श्रेयांसो भविष्यथेति। आ कियत इति? आबर्हिषस्तरणादिति। बर्हिषा ह वै खल्वेषा शाम्यति। सा यदि पुरा बर्हिषस्तरणात्किंचिदापद्येत बर्हिरेव तत् स्तृणन्नपास्येत्। अथ

यदा बर्हिस्तृणन्ति—अपि पदाभितिष्ठन्ति। स यो हैवं विद्वान्—अनवमर्शं यजते, श्रेयान् हैव भवति" इति॥ (शत० १।२प्र०।३।)

अपेक्ष्यते हि तेषु त्रिषु कर्म्मसु तत्तत्प्रयोगात् प्रागेव ब्रह्मणो विद्यायास्त्रेधाऽभिसंबन्धः—ऋत्विग्ब्राह्मणेषु ब्रह्मनिर्देशद्वारा, वेदमन्त्रेषु ब्रह्मनिर्द्देशद्वारा, तथा यज्ञादिकर्म्मसाधनसामग्रीविधौ ब्रह्म-निर्द्देशेन प्रयोगयाथार्थ्यप्रतिपत्तिद्वारेति।

तदेतदाह भगवान् गीतायाम्—

"ओं तत्सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥१७।२३।
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥१७।२४॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥१७।२५॥
सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते।
प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ उच्यते ॥१७।२६॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म्म चैव तदर्थीयं सदित्येवाभिधीयते ॥१७।२७॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।
असदित्युच्यते पार्थ न च तत् प्रेत्य नो इह" ॥१७।२८॥

अयमत्राभिसन्धिः। ब्रह्मशब्दो ज्ञानमाह,उक्तं चाभियुक्तैः—

"प्रत्यस्ताशेषभेदं यत् सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्"॥ इति।

तदिदं ज्ञानं पञ्चविधम्—सत्यज्ञानम्, योगजज्ञानम्, विज्ञानम्, प्रज्ञानमैन्द्रियकं चेति। उक्तं च भगवता नारदेन पाञ्चरात्रे—निर्विषयकत्वान्निर्विकल्पकं विश्वव्यापि किञ्चिदनिरुक्तमीश्वरस्वरूपं ज्योतिः सत्यम् ॥१॥ अथ जीवाव्ययविद्याविभागस्य निरावरणत्वे प्रकाशोदयात्सिद्धमात्मस्वरूपं ज्योतिर्योगजं ज्ञानम् ॥२॥ अथ बुद्धिविकाशरूपं ज्योतिर्विवेचनाहेतुर्विज्ञानम् ॥३॥ अथ मानसविकासरूपं ज्योतिः सर्वेन्द्रियसाधारणं प्रज्ञानम् ॥४॥ अथ पञ्चेन्द्रियविकासरूपमेकैकेन्द्रियविभक्तविषयानुगतं पञ्चधा विभक्तं ज्योतिरैन्द्रियकम् ॥५॥

तदिदं पञ्चविधं गुणभेदात् पुनश्चतुर्विधम्—शुद्धसात्त्विकम्,[१] मलिनसात्त्विकम्,[२] राजसम्,[३] तामसं[४] चेति। तदित्थं विंशतिः कला ज्ञानस्योपपद्यन्ते। तत्र बौद्धमानसैन्द्रियकाणि नैसर्गिकाणि द्वादश-विधानि ज्ञानानि आविद्वत्कुलमापामरं सर्वलोकसाधारणानि लक्ष्यन्ते। अथ आत्मीयानि, ऐश्वराणि च ज्ञानानि अष्टविधानि प्रयत्नसाध्यानि। तानि च बुद्धियोगमाहात्म्यादेव कस्मिंश्चिज्जीवे तदुदयप्रति-बन्धकलशुनपलाण्ड्वादिदोषासंनिधाने आहारशुद्धौ कदाचिदुद्यन्ति, अथ दोषसंयोगात्पुनर्नश्यन्ति चेति—प्राचां दीर्घदर्शिनां विदुषां परामर्शः। तानीमान्युभयविधान्यपि ज्ञानानि नित्यविज्ञानशब्देनेह व्यवहरिष्यामः॥

मनोमयप्राणगर्भितवाक्प्रकाशकमानन्दोदयं ज्योतिर्नित्यविज्ञानम्। नित्यविज्ञानघन एवायमेक-स्तावदीश्वरो नामाव्ययाक्षरक्षरमयोऽमृतपुरुषः। विश्वव्यापी स नित्यः परिपूर्णरूपः। तदुक्तम्—

"यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्॥" इति॥

तस्य वाचकः प्रणवः। अकारोकारमकाराणां वैज्ञानिकनये मनःप्राणवागभिधायित्वात्, अन्त्यस्यार्द्धमात्राभागस्य वर्णस्फोट-पदस्फोटरूपस्य शान्तानन्दज्योतिष्ट्वेन प्रतिपन्नत्वाच्च। अपि च-तस्य वाचकस्तच्छब्दः, सर्वजगत्तननहेतुत्वात्। तदुक्तं भगवता—

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" ॥१८।४६॥
"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना"। (९।४)
"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्" ॥(२।१७) इति।

अपि चेदमीश्वररूपं विश्वव्यापि विज्ञानं सच्छब्दं भवति, सत्तारूपेण विश्वव्याप्तत्वात्। तथा चेदं विश्वव्यापीश्वरविज्ञानं ब्रह्म त्रेधा निर्दिश्यते—ओं तत् सद्–इति। इत्थं च पर्य्यायवचनैरेभिस्त्रिभिः शब्दैराख्यातमिदमेकमेवाद्वितीयं परिपूर्णं विश्वव्यापीश्वररूपं विज्ञानमिह लोके त्रिष्वायतनेषु पृथक् त्रिभिः शब्दैः साक्षात् क्रियते। शब्दश्रवणाव्यवधानेनाविर्भूतं शब्दस्थानं विज्ञानं वेदशब्देन, वेदार्थ-परिशीलनोपनीतमात्मस्थानं विज्ञानं विद्वच्छब्दापरपर्य्याय – ब्राह्मणशब्देन, ब्राह्मणबुद्धिविचारोप-कल्पितसाधनसामग्रीसंपादितयज्ञप्रक्रियाविषयं विज्ञानं च यज्ञशब्देन। तत्रैतेषु त्रिष्वपि विज्ञानायतनेषु त्रुटेः संभाव्यमानतया कर्म्मफलवैकल्यहेतुभूतं साधनवैकल्यं संभाव्यते। तस्मात्तादृशत्रुटिपूर्तये त्रयाणां तेषां विज्ञानायतनानां विश्वव्यापीश्वरप्रजापतिस्मरणोपस्थापित–परिपूर्णानन्तविज्ञानसमुद्रे प्रवेशोऽपेक्ष्यते, "प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा" इति श्रुतेः, समुद्रस्रोतसा सर्वविधन्यूनतायाः परिपूर्णत्वस्य नाप्राप्तत्वात्। तामेतामेवोपनिषदमास्थाय प्रतियज्ञा*दीश्वरस्मारकस्त्रिविधः शब्दः प्रयुज्यते। आह च भगवान्—

"कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपम्" "स तं परं पुरुषमुपैति दिव्यम्" ॥ (भ० गी० ८।९।१०)
"अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः" ॥ (८।१४) इति

तत्रेदं तावद्वैदिकं कर्म्म द्वैविध्येन मनुः स्मरति—

"सुखाभ्युदयिकं चैव, नैःश्रेयसिकमेव च।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म्म वैदिकम् ॥१२।८८॥
इह चामुत्र वा काम्यं प्रवृत्तं कर्म्म कीर्त्यते।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते ॥१२।८९॥
प्रवृत्तं कर्म्म संसेव्य देवानामेति साम्यताम्।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै" ॥१२।९०। इति।

देवसत्यविजयौपयिकं दैवशक्त्याऽर्थसंसाधनं प्रवृत्तं कर्म्म। तेन च कर्म्माश्वत्थप्रजननौपयिकं वासनालक्षणमागामिकर्म्म प्रवर्तते। अथ ब्रह्मसत्यविजयौपयिकं त्रिगुणदेवभूतमयसर्वविधात्मावरण-निवर्तनाद्विशुद्धात्मस्वरूपधर्म्मात्यन्तिकानन्दसंसाधनं निवृत्तं कर्म्म। यथाह भगवान्—

"विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते" ॥१८।५३॥
"ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति" ॥१८।५४॥

एतेन च निवृत्तकर्म्मणा कर्म्माश्वत्थप्रजननौपयिकबीजरूपं वासनाकर्म्म निवर्त्यते। तदुभयं विद्या-

---

* **यज्ञतपोदानानि यज्ञादीनि।**

सापेक्षं कर्म्म, प्रवृत्तस्य वैदिकविज्ञानात्मकविद्यामूलकत्वात्, निवृत्तस्य तु विद्यासमुच्चितत्वात्। तस्मात्तदुभयं वैदिकं कर्म्म। अथ लौकिकमन्यत्प्रवृत्तं कर्म्म। तेनैतानि त्रिविधानि कर्म्माणि निष्क्र्यन्ते। तत्र सृष्टिसाक्षिमनःप्राणवाक्क्रमानुगतोऽयमोंकारो ब्रह्मारब्धविश्वदृष्टिप्रवणः प्रवृत्तिस्वरूपः प्रवृत्तकर्म्मविषयकविज्ञानन्यूनतापूर्तये विज्ञानस्रोतःप्रचारको भवति। विश्वतननकर्तृवचनोऽयं तच्छब्दश्च विश्वारब्धब्रह्मदृष्टिप्रवणो निवृत्तिस्वरूपो निवृत्तकर्म्मविषयकविज्ञानन्यूनतापूर्तये विज्ञानस्रोतःप्रचारको भवति। अथ साधुभाववचनोऽयं सच्छब्दः साधुत्वप्रत्ययोपजनितलोकरुचिप्रवृत्तिनिमित्तकलौकिकसत्कर्म्मविषयकविज्ञानन्यूनतापूर्तये विज्ञानस्रोतःप्रचारको भवति, इति।

**इति कर्मयोगसमीक्षा**

# अथ विषयरहस्ये ज्ञानयोगसमीक्षा

यावन्ति ज्ञानानि साधनतः फलतश्च पारलौकिकानेवार्थानपेक्षन्ते, आधिदैविकैरेव साधनैः कल्पमानानि पुनराधिदैविकानेवार्थान् प्रजनयन्ति, तेषां ज्ञानानां सविज्ञानानामुपसंग्रहणमनुशासनं च ज्ञानकाण्डम्। तत्र पारमार्थिका एव हि वैज्ञानिका भावा उपदिश्यन्ते। तत्र च ज्ञानविज्ञानयोः परस्पर-सापेक्षत्वात् प्रक्रमभेदेन तदुभयं व्यवस्थाप्यते। विभिन्नरूपाणामनेककार्य्यजातानां कारणैकत्वोपपादने-नैकत्वव्यवस्थापनं ज्ञानपदार्थः। एकत्वेन प्रतिपन्नात् कुतश्चिदेकस्माद् मूलतत्त्वादनेकानेककार्य्यजाता-नामाविर्भावक्रमोपपादनं विज्ञानपदार्थः। एकस्मिन् वा कस्मिंश्चिदर्थेऽन्तर्भूतानामनेकेषामारम्भक-द्रव्याणां विभज्य नामरूपकर्म्मभिर्व्याकरणं विज्ञानपदार्थः ॥

एकस्माद् ब्रह्मतत्त्वात् [1]परात्पर-पुरुष[2]-[3]सत्य-[4]यज्ञ-[5]विराट्स्वरूपया पञ्चिकया तत्त्वविभागः। स्वयम्भू[1]-परमे[2]ष्ठीन्द्र[3]-सोमा[4]ग्नि[5]-रूपया पञ्चिकया ईश्वरविभागः। अथ शान्तात्मा[1], महानात्मा[2], विज्ञानात्मा[3], प्रज्ञानात्मा[4], भूतात्मा[5]—इत्येवंरूपया पञ्चिकया पञ्चदशकलो जीव-विभागः। तदित्थमेषां त्रयाणां तत्त्वेश्वरजीवविभागानां विज्ञानमेवैतत् सर्वजगद्विज्ञानं भवति।

ज्ञानं कर्म्म चेति द्वे तत्त्वे। तत्र ज्ञानात् कर्म्माणि क्रियन्ते, कर्म्मणा च ज्ञानान्युत्पाद्यन्ते—इत्य-स्त्यनयोरुपकार्य्योपकारकभावः। तयोश्चैतत्कर्म्म प्रवृत्तनिवृत्तभेदाद् द्विविधम्। हृद्ग्रन्थिजनकं बन्धकं वासनामयं प्रवृत्तकर्म्म। हृद्ग्रन्थ्युन्मोचनं बन्धमोचनं वासनोच्छेदकं निवृत्तकर्म्म। तयोः प्रवृत्तं कर्म्म ज्ञानादुत्पद्यतेऽनुष्ठीयते च। ज्ञानं तु निवृत्तकर्म्मत उत्पद्यते प्रज्ञायते च। अथवा कामात् क्रियमाणं कर्म्म तावद् वासनाजनकत्वाद् वासनायाश्चोत्तरोत्तरकर्म्मशृङ्खलाप्रवर्तकत्वात् प्रवृत्तं कर्म्म। ज्ञानो-त्पादकं तु कर्म्मनिवर्तकत्वान्निवृत्तं कर्म्म। तद्धि यथा यथा ज्ञानमुद्भावयति, तथा तथा ज्ञानविरोधप्रभा-वात् कर्म्माणि स्वयं विलुप्यन्ते। कतकरजोवत् कर्म्मैव नैष्कर्म्यं जनयति। यथाह भगवान्—

"न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" ॥३।४॥ इति

निवृत्तकर्म्मणा च सर्वकर्म्मात्यन्तनिवृत्त्या नैष्कर्म्यसिद्धिर्ज्ञानयोगः। ज्ञानान् मुक्तिः, तथा हि—ज्ञानतः कर्म्ममोचनं मुक्तिः, हृद्ग्रन्थिमुक्तिः, कर्म्मबन्धत्रयमुक्तिः, वासनामुक्तिश्च ज्ञानादुत्पद्यन्ते। कर्म्म-मूलका ह्रीमे हृद्ग्रन्थयः, कर्म्मबन्धा वासनाकलापाश्चोपपद्यन्ते। ज्ञानं तु कर्म्मविसंवादी पदार्थः। तेनैतज्ज्ञा-नोदये तत्प्राबल्यात् कर्म्ममूलकास्ते हृद्ग्रन्थ्यादयोऽर्था नियमेन मुच्यन्ते। यद्यपि नैकान्ततः कर्म्मक्षयो भवति, ज्ञानकर्म्मणोरुभयोरीश्वरस्वरूपारम्भकत्वात्, तथापि कर्म्मणां चितिभङ्गेन बन्धग्रन्थिर्निव-र्तते, सहचरभावेन चात्मन्यवस्थानं भवतीति, चितिमूलकबन्धग्रन्थिकर्म्मणो निवृत्तिरेवैष नैष्कर्म्यपदार्थो मुक्तिपदार्थश्चाभिप्रेयते—इति भाव्यम्। इत्थं चैतन्नैष्कर्म्यज्ञानसाधनोपदेशो ज्ञानकाण्डार्थः।

इति ज्ञानयोगसमीक्षा ॥

# अथ विषयरहस्ये भक्तियोगसमीक्षा

अथ भक्तियोगः समीक्ष्यते। वैदिकोपासनाकाण्डस्यायमुद्देशो भक्तियोगः। आधिदैविकं चाधिभौतिकं चेति यत्रोभयविधं कर्म्म समुच्चीयते, कर्म्म च ज्ञानं चेत्युभयं वा यत्र समुच्चीयते तत्रेदमेकस्यापरं भक्तिर्भवति। उभाभ्यां वा ताभ्यां भक्तिभ्यां ज्ञानकर्म्ममयं किञ्चिदेकं साध्यं विधीयते। स उपासनाकाण्डार्थः। तत्र व्यावहारिकेण कर्म्मणा पारमार्थिकं ज्ञानं संपाद्यते। तथाहि—

आधिभौतिके कस्मिंश्चिदर्थे बाह्यदृष्टिं विन्यस्य तन्मूलकमसंनिकृष्टे कस्मिंश्चिदाधिदैविके ऽर्थान्तरे मनोदृष्टिसमुन्नयनमुपासनम्[१]। प्रत्यक्षप्रत्ययेन परोक्षेऽर्थे प्रत्ययप्रवाहसंपादनमुपासनम्[२]। बुद्धिसंनिकृष्टार्थद्वारा विदूरार्थ-प्रत्ययधारणमुपासनम्[३]। विजिज्ञासितस्य भावस्य यत्किंचिद्रूपं प्रतिपद्य तत्र सत्यत्वेनास्थाधारणं श्रद्धानम्। श्रद्धानपारवश्यात् तदनुकूला वैज्ञानिकी परिचर्य्या ध्यानादिरूपा बुद्धियोगस्तदुपासनम्[४]। अयमीश्वरोऽस्तीति विश्वासभाजां दृढप्रत्ययेन सूर्य्ये गुरावववतारपुरुषे वा ईश्वरोचितकर्म्मकरणमुपासनम्[५]। मनसा धार्यमाणेऽर्थे मनःसंयमेन बुद्धिस्थैर्यमुपासनम्[६]। एतेषामुदाहरणानि ब्राह्मणारण्यकोपनिषत्सु यत्र तत्र प्रयुक्तेषूपासनाशब्देषु भावनीयानि।

अथवा विपर्य्यस्तमिदमुच्यते। आधिदैविकत्वाद्विज्ञानद्वारैव प्रत्याययितुं शक्ये विप्रकृष्टतमे कस्मिंश्चित्प्रत्येतव्येऽर्थे विज्ञानासमर्थानामधिकारिणां सौकर्य्येण प्रत्ययोत्पत्त्यर्थमाधिभौतिके कस्मिंश्चित्संनिकृष्टतमेऽर्थे आहार्य्यारोपमूलकं प्रतिरूपमूलकं प्रतीकमूलकं वा प्रत्ययालम्बनं कृत्वा तत्प्रत्ययप्रवाहोत्पादनमुपासनम्।

यथा, आहार्य्यारोपेण प्रक्लृप्तं लिपिविशेषमालम्बमानेन मनसा कस्मिंश्चित्प्रत्यये वागक्षरे अ—क—च टादिलक्षणे स्वरव्यञ्जनादौ बुद्धिः क्रियते। न चेयं लिपिरस्य वागक्षरस्य प्रतिकृतिर्वा संभवति, प्रतीकं वा। लिपेः साकारत्वेन वागक्षरस्य तु निराकारत्वेन प्रतिकृतित्व-प्रतीकत्वयोरसंभाव्यमानत्वात्। तस्मादियं तृतीया विधा भवति। अनयैव विधया कुशमुष्टिर्वेदत्वेन यज्ञे विवक्ष्यते, क्वचित् पुनः—आर्त्विज्येन च ब्रह्मत्वेन प्रकल्प्यते, यत्रासौ योग्यो विद्वान् ब्रह्मा नोपलभ्यते।

अथ प्रतिरूपविधया यथा—चित्रप्रतिकृत्या चित्रवति बुद्धिरुन्नीयते। अपि च यथा शिलाखण्डविशेषप्रत्यायकेन शालग्रामशिलाशब्देन प्रतिपन्नात् प्रत्ययालम्बनरूपाद् भौतिकार्थादाधिदैविकस्य हिरण्यगर्भस्य विष्णोरुपासनम्। यथा वा वृक्षविशेषप्रत्यायकेनाश्वत्थशब्देन ब्रह्माश्वत्थ—कर्म्माश्वत्थयोः प्रत्ययोत्पादनमुपदिशन्त्याचार्य्याः। यथा वा पशुविशेषवाचकाभ्यां कूर्म्म-कश्यपशब्दाभ्यां जगत्स्रष्टरि प्रजापतौ बुद्धिः क्रियते, सेयं प्रतिकृतिस्त्रिधा भवति।

अथान्या प्रतीकविधा भवति। प्रतीकोऽवयवः। यथा खल्वङ्गुलिग्रहणेन पितृग्रहणबुद्धिः, चरणसेवया गुरुसेवाबुद्धिः, एवं सर्वत्र जगद्व्यापकस्यैकस्याव्ययस्य क्वचिदेकत्र प्रत्यंशे समालम्बितया बुद्धया अवयविनि समुदाये विश्वेश्वरलक्षणे बुद्धिकरणमुपासनारूपं भवति। तयैव च विधया मनुष्य-

वच्छरीरोपलक्षितयो रामकृष्णयोः श्रद्धीयमाना धीराधिदैविके भगवति जगदीश्वरे समुपनीयते। सेयं रामकृष्णादिदृष्ट्या जगदीश्वरोपासना संपद्यते। तदिदमेकैकविधया तावदुपासनं व्याख्यातम्।

क्वचित्पुनर्द्वयोर्विधयोस्तिसृणां वा समुच्चयो भवति। यथा चित्रपटालम्बितया दृष्ट्या चित्रवत्यर्थे मनोयोगस्तथेहापि रामकृष्णादिप्रतिमूर्तिपदालम्बितया धिया रामकृष्णादौ शरीरिणि मनोयोगः, तद्द्वारा पुनर्भगवति यज्ञपुरुषे विष्णौ मनसः समर्पणं प्रतिफलतीत्युपासनं भवति। तत्र चोपासनायां भगवज्ज्ञानमय्यां मनुष्यस्वामिवत्सर्वे परिचर्य्यादिकर्म्मव्यवहारा लोकवत् क्रियन्ते। अलौकिकस्तु परमार्थो भगवानीश्वरस्तदाराधनकर्म्मणा बुद्धौ संनिधीयते। तेनात्र ज्ञानकर्म्मणोरुभयोः समुच्चयः। आधिभौतिकं स्नानीयपाद्यार्घ्याचमनीयभोगसमर्पणाद्युपचाररूपं साधनम्, अथाधिदैविकं भगवद्रूपसन्निकर्षादिरूपं फलमित्येवं भवत्यत्रोभयोरेवाधिकरणयोः समुच्चयः। तत्राधिभौतिकसाधनप्रकरणमस्ति भक्तिः साध्यस्याधिदैविकस्य भगवज्ज्ञानस्येति स भक्तियोग आख्यायते ॥

अस्यां च भक्तियोगसमीक्षायां श्रीकृष्णोपासनायां वैज्ञानिकत्वमावेदयितुं दर्शितमेवोपासनारहस्यं पुनः श्रीकृष्णसंबन्धेन वैशद्यादाकलयामः। तथा हि—मनसा धारणम्, धार्य्यमाणे वा विषये समानप्रत्ययप्रवाहः उपासनेति[१] श्रीशङ्करः प्राह। प्रत्ययस्तद्बुद्धिर्विज्ञानम्। भ्रमाज्ञानव्यतिरेकेणान्यत्रान्यभावना बुद्धिरुपासना[२]। अन्यसिद्धयर्था चान्यत्र स्थितिरुपासना[३]। श्रद्धानसूत्रेण मनोबुद्धयर्पणमुपासना[४]। श्रद्धासूत्रद्वारा परत्रात्मनि स्वमनोबुद्धिमात्मांशमर्पयन्तः परमात्मभक्ता भवन्ति। भक्तिर्भागोंऽशः। भक्तिकरणं कर्म्माप्युपचाराद् भक्तिः। तथा च भक्तिरुपासना। पृथगात्मापि परत्रात्मनि भक्तिभूतः सन्नुपास्ते। परमात्मन्यात्यन्तिकमनोयोगद्वारा संनिधानेन जीवात्मनोऽवस्थानमुपासनम्। सालोक्य-सामीप्य-सारूप्य-सायुज्यान्यतमसंबन्धेन सान्निध्यं गतस्तत्रायं प्रतितिष्ठति। तेन जीवात्मनः परमात्मभक्तिभावसंपत्तिरुपासना। तद्वृत्त्यनुकूलवृत्तिं धारयमाणस्य तदिच्छानुसारेणाचरणमुपासनम्। श्रद्धानसूत्रार्पितमनोवृत्त्यनुकूलदृष्टिसूत्रार्पितायाः श्रद्धेयपरिस्थित्यनुरोधवदपेक्षाबुद्धिसहकृताया भावनाबुद्धयास्तदनुरोधापेक्षितवृत्तिस्थिरता उपासना—इति सिद्धान्तः ॥

दोषदर्शनानुकूलवृत्तिप्रतिबन्धकवृत्तिधारणं श्रद्धा। सा च वृत्तिर्निर्दोषसत्यत्वविश्वासपुरस्कृताश्रयणीयत्वास्था। दृष्टिस्तत्र चाक्षुषी, मानस्येव वा। सर्वत्र चाक्षुष्या असंभवात्। [१]उपास्यं [२]ध्येयं [३]लक्ष्यं [४]प्रतीक्ष्यमनुरोध्यम्[५] [६]आराध्यं, [७]वेद्यमित्येकोऽर्थः। वित्त्युपास्त्योरनतिविशेषेणोपदेशाद् वेद्योपास्ययोरभेदेनाध्यवसेयत्वात्। उक्तं च श्रीशङ्करेण—"आवृत्तिरसकृदुपदेशाद्" इतिसूत्रभाष्ये—

**"वित्त्युपास्त्योश्च वेदान्तेषु व्यतिरेकेण प्रयोगो दृश्यते। क्वचिद्विदिनोपक्रम्योपास्तिनोपसंहरति। क्वचिच्चोपास्तिनोपक्रम्य विदिनोपसंहरति"** इत्यादिना। तेन वित्तिर्वित्त्युपायक्रिया वोपासना।

वयं तु ब्रूमः—न वित्त्युपासनाशब्दयोः पर्य्यायत्वम्, **"य एवमुपास्ते य उ चैनमेवं वेद"** इत्यादौ ज्ञानोपासनयोर्भेदेन व्यवहारस्येष्टत्वात्। तस्माद्विषयभेदः प्रत्येतव्यः। आत्मनो निर्गुणत्वेन ज्ञानं निर्गुणविद्या, सा वित्तिः। आत्मनः सगुणत्वेन ज्ञानं सक्रियोपचारं सगुणविद्या, सा ह्रीयमुपासना—इति भेदः। तया चोपासनया योऽर्थो लक्ष्यः स ध्येयः, स वेद्यः, स उपास्यः। **सेयमुपासना त्रिविधा**—दृष्टिबुद्धयोः सामानाधिकरण्येन पर्य्याप्ता [१]**सत्यवती**। अकृत्स्नपर्य्याप्तदृष्टिसमर्पितभावनाबुद्धेः कृत्स्नपर्य्याप्तत्वे [२]**अङ्गवती**। दृष्टिबुद्धयोर्व्यधिकरणत्वे [३]**त्वन्यवती**। तत्राङ्गवत्यन्यवत्योरुपासनयोरेवायं भक्तिशब्दो व्यवतिष्ठते, बुद्धिविषयं प्रत्यस्य दृष्टिविषयस्य भक्तित्वेनेष्यमाणत्वात् ॥

तथा चैतस्यां भक्त्युपासनायां दृष्टिबुद्धयोः सामानाधिकरण्येन पर्य्याप्तेरविवक्षितत्वात्, तादृशोपासनास्वरूपसंपत्तये तत्र त्रयो भावा अपेक्ष्यन्ते—उपासकश्च, प्रथमोपास्यश्च, परमोपास्यश्चेति। तत्र यः पश्यन् भावयति स उपासकः। अथ यं द्वारभूतं कंचिदवलम्बमवतिष्ठमाना चाक्षुषी मानसी वा दृष्टिरुपास्ये बुद्धिं समर्पयति, तदिदं द्वारभूतं दृष्ट्यवलम्बनं प्रथमोपास्यम्। अथ यत्रेयं भावना-बुद्धि-

रूपस्थायान्ते विश्राम्यति, स भावनाविषयः परमोपास्यः।। ननु उपासकेनायं परमोपास्य एवैकः साध्यः, तथा चायमन्यः प्रथमोपास्यः किमित्यन्तरतोऽपेक्ष्यते, इति चेत्—तत्र ब्रूमः—त्रिविधः खलु परमोपास्यो भवति—प्रत्यक्षः, परोक्षोऽतीन्द्रियश्च। संनिहितेन्द्रियग्राह्यः प्रत्यक्षः। असंनिहितेन्द्रियग्राह्यः परोक्षः। अनिन्द्रियग्राह्यस्त्वतीन्द्रियः। यथा खल्वयं प्रत्यक्षो गुरुरुपास्यते, यथा वैकलव्यो गुरुं द्रोणं परोक्षमुपासाञ्चक्रे, यथा वायमीश्वरोऽतीन्द्रियः सन्नुपास्यते। तत्र परोक्षेऽतीन्द्रिये च प्रत्ययोत्पत्त्यर्थं किञ्चिदिन्द्रियग्राह्यं दृष्टप्रत्ययं माध्यमिकमन्तरतोऽपेक्ष्यते। तदेवैतद् द्वारभूतं प्रथमोपास्यम्। यथा खलु किमाकारो मृगः सिंह उष्ट्रो गजो भवतीति पुत्रप्रश्ने—पिता पाषाणमयांस्तान् प्रदर्शयन्नाह—एष मृगः, एष सिंहः, एष उष्ट्रः, एष गज इति। तत्रायं पुत्रश्चेतनमेवार्थं विदन्नेतं तावत्पाषाणमयमर्थं सर्वथोपास्ते। पाषाणमये व्यापारभूतां दृष्टिं निदधानश्चेतने क्वचिदन्यत्रानिरुक्ते गजे बुद्धिं निधत्ते। तत्रायं पाषाणगजो माध्यमिकः प्रथमोपास्यः। चेतनस्तु कश्चिदसौ परोक्षः परमोपास्य इति भाव्यम्। अपि चातीन्द्रियस्य शून्यबिन्दोः संप्रत्ययार्थं स्तोकबिन्दुः प्रदर्श्यते। स विधेयः स्तोकबिन्दौ शून्यबिन्दुमुपास्ते। एवमन्यत्रान्यत्र द्रष्टव्यम्। इह हि सर्वत्र नानपेक्ष्य किञ्चिद् दृष्टियोग्यं मध्यमं स परमोपास्यः साधयितुं शक्यः। तस्मादौपयिकतया परमोपास्यादतिरिक्तोऽयमेकः प्रथमोपास्यो भक्त्युपासनायामस्यां विवक्षितः।

तद्धीदं माध्यमिकं चतुर्विधसंबन्धमर्य्यादया तदुत्तमेऽस्मिन्नुपास्ये बुद्धिं प्रवर्तयति—प्रतीकविधया, प्रतिरूपविधया, भावप्रतिमानविधया, निदानविधया चेति। अत एवेयं भक्त्युपासना चतुर्विधा निष्कृष्यते—प्रतीकोपासना, प्रतिरूपोपासना, भावोपासना, निदानोपासना चेति।

**१—प्रतीकोपासना यथा**

कृत्स्नस्य किञ्चिदेकदेशोपग्रहः प्रतीकम्। यथा जनपदस्य पुरम्, पुरस्यैकं गृहम्, गृहस्यैका शाला। मनुष्यस्य हस्ताद्येकमङ्गं प्रतीकं भवति। पाञ्चालदेशेऽहिच्छत्रानगर्य्यां एकशालायां गतस्य पञ्चालगमनं व्यपदिश्यते। पुच्छमात्रं स्पृशन् गां स्पृशामीत्याह, गोत्वस्यैकस्य सर्वाङ्गेषु व्यासज्यवृत्त्या पर्य्याप्तत्वात्। अङ्गुलिग्रहणेन पितृग्रहणं व्यपदिश्यते। एकदेशे क्वचिदवतिष्ठमाना दृष्टिः कृत्स्ने बुद्धिं प्रतिष्ठापयति। तथा च भक्तितो भक्तिमतोऽनतिरिक्तत्वादवयवदृष्ट्या बुद्धिवृत्तेः समुदाये स्थिरीकरणं प्रतीकोपासना। तद्यथा—

**"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥१॥"**
**"तदेवाग्निस्तदादित्यस्तद् वायुस्तदु चन्द्रमाः।**
**तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥२॥"**

इत्यनेकेषामैकात्म्यमाम्नायते। अत्रैकत्वमङ्गिसापेक्षम्। इन्द्रमित्रादिना रूपकर्म्मभेदेन भेदव्यपदेशस्त्वङ्गसापेक्षः। इन्द्रादयो हि सर्वे देवा एकस्यैवेश्वरस्य विभिन्नकर्म्माणि भिन्नभिन्नान्यङ्गानि। स यदीन्द्रमेवैकमुपास्ते, यद्यग्निम्, यदि वरुणम्, सर्वथैक ईश्वर एव प्रतीकोपासनयोपासितो भवति, आराधितो भवति। प्रतीकभेदेऽपि प्रतीकतो गृहीतस्यात्मनः सर्वाङ्गपर्य्याप्तस्याभिन्नत्वात्। गङ्गानद्याः क्वचिदेकप्रदेशेऽवगाहमानस्य गङ्गावगाहनवत्। उक्तञ्च भगवता वेदव्यासेन शारीरकसूत्रे—**"सर्वाभेदादन्यत्रेमे"** इति। सर्वस्याङ्गिनः प्रत्यङ्गाभेदादिमेऽङ्गिधर्म्मा अन्यत्रान्यत्राप्यङ्गे पर्य्याप्त्या विवक्ष्यन्ते—इत्यर्थः। अन्येऽप्याहुः—

**"सर्वदेवनमस्कारः केशवं प्रतिगच्छति" इति।**

गीतायामपि स्मर्य्यते—

**"येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्" ।।९।२३।।**

अत्र मामेवेत्यव्ययममृतात्मानमाह । सोऽयं सर्वेषामेषां जीवात्मनामङ्गी भवति ।

**"सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।**
**अविभक्तं विभक्तेषु विभक्तमिव च स्थितम् ।।**
**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।**
**विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति" ।।**

इत्येवं तस्याव्ययस्य विश्वव्यापकैकात्म्यस्मरणात् । तत्र च तास्ताः सर्वा देवता अपीता इष्यन्ते—

**"यदक्षरं पञ्चविधं समेति युजोयुक्ता अभि यत् संवहन्ति ।**
**सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकीभवन्ति ।।"**

इति मन्त्रश्रवणात् ।

तथा चैतासां भगवद्रूपविशेषत्वेन प्रतीतानां सर्वासां देवतानां मध्यादेकामपि कांचिद्देवतां भजमानस्तमङ्गिनं भगवन्तमेवाव्ययमात्मानं भजतीत्यभिप्रायेणाह—**"तेऽपि मामेव यजन्तीति"** । सेयमेकदेशप्रतिपत्त्या कृत्स्नप्रतिपत्तिरूपा प्रतीकोपासनैव तावदेतेषूपदिष्टा भवति ।।

**२—अथ प्रतिरूपप्रतिमोपासना व्याक्रियते**

तथा हि—चित्रप्रतिमादिप्रतिकृतिरूपं शिल्पं प्रतिरूपम् । तत्रालम्बिताया बुद्धेरन्यत्र विप्रकृष्टे प्रतिमेये स्थितिरुपपद्यते । सा चेयं प्रतिमा द्विविधा भवति-प्रतिकृतिर्भावश्च ।

रूपवतः साकारस्य चित्रपटद्वारा दारुपाषाणादिफलकद्वारा वा प्रतिरूपशिल्पेन सादृश्योपपादनं प्रतिकृतिप्रतिमा भवति । यथा मृण्मयधातुमयादिविम्बविशेषेषु गजाश्वगवाव्यजादिबुद्धिः सादृश्यमहिम्ना प्रतितिष्ठति, एवमिह विश्वात्मा भगवान् हिरण्यगर्भ ईश्वरः प्रतिरूपदृष्ट्या साक्षात्कर्तुमिष्यते । स हि जगदाधारो भूतपतिः श्रूयते—

**"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" ।। इति ऋ० १०।१२१।१।।**
**"यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।**
**यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम" इति ।। ऋ० १०।१२१।६।।**

तमेतं प्रत्यक्षमिव दृश्यमानमुपासितुकामस्तत्प्रतिकृतिमपेक्षते । आतश्चैष उपासकः प्रकृतिसिद्धां विश्वाकाराकारितहिरण्यगर्भप्रतिकृतिरूपां हिरण्यगर्भसंज्ञां शालग्रामशिलामुपास्ते । इयं हि शालग्रामशिला यथारूपेण दृश्यते, एवमेवायं विश्वात्मा हिरण्यगर्भो दिवि प्रतितिष्ठति । यथा हृचेष श्रूयते—

**"तस्मात्परं नापरमस्ति किञ्चित्तस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् ।**
**वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" ।। इति ।।**
**"सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।भ० गी०१३।१४।।**
**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**अमलं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च" ।।भ०गी०१३।१५। इति ।।**

एतेन वर्तुलवृत्तत्वं हिरण्यगर्भस्योपपादितं भवति । तथा च हिरण्मयसौरज्योतिर्मण्डलगर्भितस्य भगवतो हिरण्यगर्भस्य परमेष्ठिनः कृष्णमूर्तेः सर्वात्मना शालग्रामशिलायां सौसादृश्यमुपपद्यते । तत्र च कृता दृष्टिः सादृश्यमहिम्ना विश्वमूर्तौ भगवति हिरण्यगर्भेऽञ्जसा बुद्धिमर्पयति । तस्मादियं शालग्रामशिलोपासना विश्वमूर्तेरीश्वरस्य प्रतिरूपोपासना भवति ।

### ३—अथ भावमयप्रतिमोपासना व्याक्रियते

निराकारस्य नीरूपस्य प्रतिकृत्यसंभवाद् भावमयी प्रतिमा क्रियते। यथा व्यासपृष्ठाभ्यां विकलस्यापिण्डस्यानुपाख्यस्य शून्यबिन्दोः शिक्षार्थं पिण्डबिन्दुर्निर्दिश्यते। तत्रैतस्मिन् स्तोकबिन्दावध्यस्तया बुद्ध्या शून्यबिन्दुरुपास्यते। पिण्डबिन्दुर्लक्षकः, शून्यबिन्दुर्लक्ष्यः। लेखलक्षितपत्राद्युपनिबद्धा विज्ञानग्रन्था लक्षकाः, अशरीराणि तु भावनागम्यानि विज्ञानानि लक्ष्याणि। न चान्यथा तानि लक्षयितुं शक्यन्ते। तस्मादनाकारज्ञानौपयिके साकारे समर्पिता बुद्धिरनाकारोपासना भवति। तत्रानाकारसाकारयोः प्रतिरूपत्वासंभवेऽपि यथाकथंचिद् गृहीतं विवक्षितप्रातिरूप्यं भावमयमेवैतयोर्भिन्नयोरभेदप्रत्यभिज्ञाहेतुः। सेयं भावमयी प्रतिमा भवति॥

### ४—निदानोपासना

अथ साधर्म्यविशेषाभावेऽपि यादृच्छिकस्य कस्यचिदर्थस्याहार्य्यारोपविधया संकेतसंबन्धमुत्पाद्य स्मारकत्वप्रकल्पनं निदानम्। संकेतो निदानम्। यथा शोकस्यापकीर्तेश्च कृष्णं रूपम्, क्रोधस्य रक्तं रूपम्, कीर्तेर्मोक्षस्य च शुक्लं रूपम्, सत्त्वरजस्तमांसि शुक्लरक्तकृष्णानि, हस्तिना लक्ष्मीः, ध्वजेन विजयः, छत्रेण राज्यम्, दण्डेन शासनम्, पद्मेन पृथ्वी, इत्येवं निराकारोऽप्यर्थस्तेन तेन परिकल्पितेन साकारद्रव्येण संकेतविधया परिलक्ष्यते, तन्निदानम्। भूयसा च सर्वेऽमी लोका निदानविधया यत्र तत्र प्रवर्त्तमाना दृश्यन्ते। अनेन च निदानेनाहार्य्यारोपप्रभावादन्यत्रान्यबुद्धिः क्रियते। अङ्गुलिरचनाविशेषप्रदर्शनेन गृहीतसंकेतस्य संकेतितस्थानविशेषगमनादिप्रत्ययवत्। तस्मादिदं निदानमपि माध्यमिकं सिद्धम्। माध्यमिके चालम्बमानं मनः परस्मिन्नप्रत्यक्षेऽर्थेऽनुक्रममाणं लब्धावसरं भवति। तेनैषोऽतीन्द्रियोऽप्यर्थोऽञ्जसा विदित उपासितो भवति।

ईश्वरश्चायमतीन्द्रियोऽर्थः। स नान्तरेण माध्यमिकं शक्यमुपासितुम्, इन्द्रियातीतेऽर्थे मनोऽवस्थानायोगात्। तस्मादुपास्योपासकयोर्मध्ये माध्यमिकं शालग्रामशिलादिकं किञ्चिदालम्बनमिन्द्रियस्यापेक्षन्ते। तदध्यास्यं भावप्रतिमानम्, अथेदङ्कारभूतं प्रथमोपास्यम्। गुरोर्जीवात्मा वा, जीवात्मप्रतीकोपलक्षितः परमात्मा वा परमोपास्यः। न चैतदुभयं शक्यमिन्द्रियैरुपग्रहीतुम्। अगृहीतस्य च नोपासना संभाव्यते। इतरवृत्तिनिरोधपूर्वकेणैकत्र मनोयोगेन समानप्रत्ययप्रवाहस्यैवोपासनात्वान्निर्विकल्पकनिरालम्बनसमाधेरशक्यत्वात्। इह तु मध्यमे भावमये प्रतिमाद्यवलम्बनेऽध्यस्येदं मनो जहदजहल्लक्षणया कस्मिंश्चिदप्रत्यक्षे विषयेऽनुक्रमते॥

अपि चाहु:—कस्मिंश्चिदर्थे मनोयोगस्य सादरदीर्घकालनिरन्तरमनोऽवस्थानस्य चासाधारणं कारणं प्रेमा भवति। प्रेम्णा हि मनःसंलग्नं यावत् प्रेमावतिष्ठते। प्रतिकृतिविधा वा भावमयी प्रतिमा वा शिल्पत्वात्प्रेमोत्पत्तौ मुख्यो हेतुः। सहृदयो हि जातप्रेमा मूर्तामिन्द्रियग्राह्यां कांचित्प्रतिमां पश्यन्नेव तद्द्वारा ततोऽन्यत्र मनः संधत्ते, तत्रैव चायं श्रद्धत्ते। तत्र यावदस्मिन्नाराध्ये परमेण प्रेम्णा मनःसंधानं तावदस्योपासकस्य तपो नाम। तपसा च भावितोऽयममूर्तो देवो मूर्ते बिम्बे निदानेनारोपितः प्रतिभासते। अमूर्तत्वाद्विप्रकृष्टतमोऽप्ययमाराध्यो मूर्तबिम्बद्वारा संनिहिततमः प्रगृहीतो भवति। तत्र निरतिशयः प्रेमा हेतुः। प्रेम्णि च बिम्बस्याभिरूप्यं हेतुः। अभिरूपे च मूर्तद्रव्यं हेतुः। तथा च स्मरन्त्याचार्य्याः—

**"अर्चकस्य तपोयोगादर्चनस्यातिशायनात्।**
**आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति॥" इति॥**

तत्र चामूर्तस्य वेद्यस्य बुद्धिसान्निध्याय सन्निहितं किञ्चित्साधर्म्येण विवक्षितं भावप्रतिमानं निदानं वा माध्यमिकमपेक्ष्यते। तदिदं माध्यमिकमालम्बनं प्रथमं पदम्। उपास्यं त्वप्रत्यक्षं पुनःपदम्। पद-पुनःपदयोः पृथक्त्वेन विज्ञातयोरप्यभेदेन बुद्धिकरणमुपासनं नाम। तथा चैतयोरुभयोरेवोपास्यत्वं

निष्कृष्यते। द्वारोपास्यत्वं मध्यमस्य, परमोपास्यत्वं तूत्तमस्येति। नान्यतरेण विनाऽन्यतरस्योपास्यत्वमुपपद्यते, मूर्तामूर्तयोरुभयोरेवोपासनाकर्म्मण्यपेक्ष्यमाणत्वात्। तत्रामूर्तमनद्धाभावं मूर्तत्वेनोपास्ते। मूर्तञ्चामूर्तत्वेनोपास्ते। यथा अग्निचयनविद्यायां श्रुतौ जगत्पितुः प्रजापतेः कूर्म्मरूपस्य पुरुषस्यामूर्तस्यानद्धारूपतया भावप्रतिमानेन कश्यपरूपेणोपास्य, तत्पुनरपां प्रतिमाभिरवकाभिरधरोत्तराभिरुपसंवृत्य लोकत्रयरसैर्दधि-घृत-मधुभिरभ्यज्य तेन चितिं संपादयति। तत्रापरिमितानाममूर्त्तानामनद्धाभूतानां तेषां कूर्म्मान्लोकरसानामद्धाभूतैः परिमितैर्मूर्तैः कश्यपाकारैः प्रतिमानं विधीयते। हविर्य्यज्ञे च मूर्तं कृष्णाजिनं निराकाराया अमूर्तायास्त्रय्या विद्यायाः प्रतिमा विधीयते। अन्ये चैवं बहवो यत्र तत्र श्रुतौ निराकारभावानां साकारभावाः प्रतिमानानि क्रियन्ते। लिप्यक्षर-शब्दाक्षर-परमाक्षराणामिवैतेषां मूर्तामूर्तानामभेदप्रत्ययेन प्रवर्तन्ते लोकाः। तेषामेकस्मिन्नध्यासिता बुद्धिरन्यत्रो**पासिता** भवति। तदिदं वैज्ञानिकं कर्म्मैवोपासना नामाख्यायते—इति भाव्यम्॥

चतुर्विधापीयमुपासना शक्यते यत्र तत्र यथेच्छं कर्तुम्। यथा चेयं श्रीकृष्णोपासना अधिकारिभेदेन द्वेधा संभाव्यते—प्रतीकोपासना भावोपासना चेति। तत्रैतस्य यादवस्य माधवस्य सात्वतस्यावतारपुरुषविशेषस्य श्रीकृष्णस्यायमाकारो यस्य परमात्मनः प्रतीकम्, यस्य वेयं भावमयी प्रतिमा भवति केषां चिदधिकारिणाम्, तं वैज्ञानिकं सत्यं कृष्णमावेदयितुमयं तावत् कृष्णः सत्य इति बहुधा समीक्ष्यते। तत्र तावत्—**"अस्ति वै चतुर्थो देवलोक आपः"**—इति श्रुतौ लोकचतुष्टयं श्रूयते, तेनायमीश्वरः सत्यो लोकचतुष्टयसाक्षी भवतीति पृथिव्यन्तरिक्षद्युपरमद्युलोकानुगतानि चत्वारि तस्य रूपाणि अभिज्ञायन्ते—मानुषम्, वैहायसम्, चाक्षुषम्, पारमेष्ठ्यञ्च। येनायं यादवो वासुदेवस्तन्मानुषम्। येनायमान्तरीक्ष्यश्चन्द्रस्तद्वैहायसम्। येनायं दिव्यः सूर्यस्तच्चाक्षुषम्। अथ येनायं समुद्रे चतुर्थे लोके गोसवो गोविन्दो नाम, तदस्य पारमेष्ठ्यं रूपम्। चतुर्णामप्येषां कृष्णानां स्वयम्भुवा सत्येनात्मना तादात्म्यं भाव्यम्। एक एवायमन्तर्य्यामी सत्यस्तत्र तत्र विभूत्याऽवतरन् विभिन्नरूपैश्चतुर्षु लोकेष्ववभासते। इत्थं च सत्यात्मनो दिव्यकृष्णस्य चतुर्लोकवासित्वस्वाभाव्यादेवायं सत्यावतारो मनुष्यरूपः कृष्णः स्वं निवासस्थानं चतुर्धा पर्य्यकल्पयत्। आदितः पृथ्वीलोक इवैष कारागारे न्यवसत्। ततोऽन्तरिक्षलोक इवैष गोकुलादौ परिविस्तृते विहारस्थाने न्यवसत्। ततो द्युलोक इवैष मथुराराज्याश्रयरूपेणातिष्ठत्। ततश्चतुर्थेऽयमपां लोक इव समुद्रगर्भे द्वारकायां परमे स्थाने न्यवसदिति, चतुर्लोकवासित्वमयमद्धा जग्राह। अयं तु विशेषः—मनुष्यावतारे तावदेक एवायं स्थानचतुष्टये कालभेदेन तस्थौ। अधिदैवतं त्वेष विश्वात्मा भगवान् कृष्णः पृथिव्यन्तरिक्षद्युसमुद्रेषु भिन्नभिन्नरूपैरवतीर्णो युगपदेव सर्वत्रावतिष्ठते। तानेतांश्चतुरोऽपि सत्यावतारान्प्रत्यक्षं यः सन्निधौ नोपेयात्, स चित्रप्रतिमादिं प्रत्यक्षीकृत्य तत्रैनं सत्यमात्मानं भावयन्नुपासीतेत्यादेशः। तत्रेदं मानुषं रूपं सानुचरितमस्यां भक्त्युपासनायां माध्यमिकं मध्यमोपास्यं व्यवतिष्ठते। तत्प्रतिमाचित्रादिकं पुनर्माध्यमिकं प्रथमोपास्यं ज्ञेयम्। तदित्थमुपासनारहस्वमनेकधा विजानीयात्।

॥ इति भक्तियोगसमीक्षा ॥

# अथ विषयरहस्ये चातुर्विद्यनिर्वचने बुद्धियोग-विद्यारहस्यम्

अव्ययपुरुषनिरुक्त्यै भगवद्गीता प्रवर्तते तत्र ।
तदुपायबुद्धियोगप्राप्त्यै विद्याश्चतुर्विधा उक्ताः ।।१।।

गुणमययोगमायावरणादप्रकाशितस्याव्ययस्य प्रकाशोपायो बुद्धियोगः। विद्याबुद्धेरव्ययेन विद्याविभागावच्छेदेन योगो बुद्धियोगः। बुद्धया युक्तोऽयमव्ययोऽपि बुद्धियोगः,

**"इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।।"** भ० गी० ४।१।।

इति भगवताऽव्ययशब्देन योगस्योपदिष्टत्वात्। तत्रेयं बुद्धिस्तावदष्टधा सांख्ये संख्यायते। धर्म्मो ज्ञानं वैराग्यमैश्वर्य्यमिति चतस्रो विद्याबुद्धयः। तद्विपर्य्ययभूताश्चतस्रः पुनरविद्याबुद्धयः—अविद्या, अस्मिता, रागद्वेषौ, अभिनिवेशश्चेति। ते चैते पञ्च क्लेशा उच्यन्ते। सर्वविधक्लेशहेतुत्वादेषां क्लेशत्वम्। अविद्याया ज्ञानेन, अस्मिताया ऐश्वर्य्येण, रागद्वेषयोर्वैराग्येण, अभिनिवेशस्य धर्म्मेण प्रतिद्वन्द्वित्वमुपपद्यते ।।

## (१) वैराग्यबुद्धियोगः

इह तावद् रागद्वेषमोहमय्यासक्तिर्वैराग्यं चेति द्वे परस्परप्रतिद्वन्द्विभूते बुद्धी भवतः। तत्र सुखानुशयिकामानुबन्ध्यनुकूलभावनाजनकवासनासंस्कारस्यासक्तिबन्धो रागः। एवं दुःखानुशयिक्रोधानुबन्धिप्रतिकूलभावनाजनकवासनासंस्कारस्यासक्तिबन्धो द्वेषः। आकर्षणबलप्रयोगो रागः। विक्षेपणबलप्रयोगो द्वेषः। कामानुबन्धी रागः। क्रोधानुबन्धी द्वेषः। कामक्रोधवैकल्यादनासक्तिर्वैराग्यम्। रागद्वेषमोहानां त्रयाणां दोषाणां परस्परानुभावितसाहचर्य्यादिकमन्यस्योपलक्षणं भवति। तेन रागद्वेषमोहशून्यत्वे वैराग्यशब्दः। अपि च विषयानुगता रागद्वेषमोहाः परस्परतो विरुध्यन्ते। किन्त्वात्मना गृहीता रागद्वेषमोहा रागेणैवानुगृह्यन्ते। यदि द्वेषे रागो न स्यादवश्यं स विद्वेषं जह्यात्। तस्माद् रागः सर्वेषां मूलम्, वैराग्यं तु सर्वेष्वेवैतेष्वौदासीन्यम्। तदिदं वैराग्यं विद्याबुद्धिः। तद्विपर्य्ययेण तु रागद्वेषमूलासक्तिरूपाऽविद्याबुद्धिः। आसक्त्या पुत्रदारगृहपशुवित्तेषु बद्ध इव आत्मा पारवश्यमापद्यते। स नात्मन एव दुःखेन, अपि त्वेषां पुत्रदारादीनामपि दुःखेन दुःखी भवतीति दुःखातिशयं गृह्णाति। तादृश दुःखोद्गारनिवृत्तये दुःखलक्षणचित्तक्षोभप्रवर्तकरागद्वेषनिवृत्तिलक्षणसमत्वसिद्धचर्थं वैराग्यबुद्धियोगप्रकारप्रकाशिका राजर्षिविद्योपयुज्यते। सैषा गीतायां प्रथमा विद्या ।।१।।

## (२) ज्ञानबुद्धियोगः

अथ विद्या चाविद्या चेति द्वे प्रतिद्वन्द्विभूते बुद्धी। तत्र अविद्येति नाभावं विद्याया आचष्टे। किन्त्वल्पार्थोऽयं 'न' शब्दः। सामान्यतो ज्ञातं विशेषतस्त्वविज्ञातम्। अथवा किञ्चिदज्ञातं किञ्चिज् ज्ञातम्। अथवा आयातीति ज्ञातमथायातं किं करिष्यतीत्यज्ञातमित्येवमादिरूपेण ज्ञानाभावसमुञ्चितं

ज्ञानमज्ञानमविद्या। अज्ञानेनावृतं ज्ञानमविद्या। अन्यथा सतोऽन्यथा ज्ञानमविद्या। भ्रमज्ञानं संशयज्ञानं चाविद्या। सोऽयं प्रमाज्ञानविपर्य्ययो नानानर्थप्रसवो भवति। उक्तं चैतद् भगवताऽपि—

**"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"** भ० गी० ५।१५ इति।

यत्र क्व च बिभेति, ज्ञानसमुञ्चितादज्ञानादेव बिभेति। तत्त्वज्ञानात्त्वभयं भवति। सुयोगात् सुखम्, हीनयोगमिथ्यायोगातियोगेभ्यो दुःखम्। ते च प्रज्ञापराधाद् भवन्तीत्यविद्या दुःखहेतुः। तादृशदुःखहेतूपस्थितिनिवृत्तये तत्त्वज्ञानार्थं ज्ञानबुद्धियोगप्रकारप्रकाशिका सिद्धविद्योपयुज्यते। सैषा गीतायां द्वितीया विद्या॥२॥

## (३) ऐश्वर्य्यबुद्धियोगः।

अथास्मितेत्यविकासमाहुः। यथा बालबुद्धिरस्मिता व्यामोहमापद्यते, व्यवहाराय न क्षमते, सा कालेन विकासमाप्नोति। यथा वा मुकुलस्य विकासादधिकदेशावगाहि पुष्पं भवति। यथा सूर्य्य-बिम्बस्य रश्मिभिर्विकासात् प्रभामण्डलं महिमा भवति। महिमा त्वेवैश्वर्य्यमुच्यते। महिम्नः सतोऽप्य-विकासादनैश्वर्य्यमस्मिता नामाविद्याबुद्धिः। अस्मितया चाविद्यया शक्तिहीनो भवति। यथा शिशोः शरीरे प्रज्ञामात्रा, प्राणमात्रा, भूतमात्रा अस्मिता भवन्तीति निर्बलो भवति। आत्मनिर्भरताया अशक्य-त्वात् पराश्रितो वश्यो दुःखेन युज्यते। यौवने पुनः सर्वमात्राविकासात् तादृशैर्बालोचितदुःखैरुन्मुक्तो भवति। बुद्धेरस्मिता च ज्ञाने कतिचिदज्ञानमात्रासमावेशहेतुः। तेनास्मितानिवृत्तये स्वात्मपरात्मै-श्वर्य्यप्रतिपत्तये ऐश्वर्य्यबुद्धियोगप्रकारप्रकाशिका राजविद्योपयुज्यते। सैषा गीतायां तृतीया विद्या॥३॥

## (४) धर्म्मबुद्धियोगः।

अथ ज्ञानेन्द्रियजनितानुभवाहितसंस्कारो भावना। कर्म्मेन्द्रियजनितश्रमाहितसंस्कारो वासना। उभयोऽप्येष दुर्व्यसनरूपोऽभिनिवेशो नाम हृद्ग्रन्थिबन्धः। यथा जलद्वाराहितरञ्जनस्य वस्त्रादावभिनिवेशो वस्त्रस्य शौक्ल्यमावृणुते, एवमयं भावना-वासनासंस्काराभिनिवेशः पुरुषस्य प्रकृतिसिद्धं भावचतुष्टय-मावृणुते। आत्मनः स्वाभाविकं धर्म्मं ज्ञानमैश्वर्य्यं वैराग्यं च पर्य्यावृत्य नैसर्गिकीं जन्मसिद्धां सांस्कारि-कीमधिकारसिद्धां वा दैवीमासुरीं वा संपदमात्मन्यधिवासयति। सेयमासुरी दैवी वा संपदस्यात्मनः स्वरूपधर्म्मो न भवति, आगन्तुकत्वेनाश्रितधर्म्मत्वात्। आगन्तुकधर्म्मत्वाच्चायमात्मानं बहुभिरनर्थैः काले काले व्यापादयति। तस्य चानात्मधर्म्मस्यात्मन्यभिनिविष्टस्य त्रेधोपक्षयः संभवति, १—परिपाकसिद्धसुखदुःखादिप्रत्ययलक्षणभोगजननेन वा, २—संस्कारसिद्धविरुद्धधर्म्मान्तर-प्रत्याघातेन वा, ३—अविद्याप्रतिबन्धकविद्याबुद्धिप्राबल्येन वा। तत्र भोगो गुणत्रयप्रकृतिसिद्धः सर्व-प्राणिसाधारणः सर्वत्र स्वारसिको दृश्यते। अथ विरुद्धास्तु धर्म्माः सत्त्वरजस्तमसामितरेतरावेशादि-तरेतरतः संभवन्ति। तेऽपि यथातथं यत्र तत्र स्वत एवोपपद्यन्ते। अथ विशुद्धेन तु सत्त्वेनोपपन्नानां निवृत्ति-लक्षणानां कर्म्मणामात्मावरणवासनामयकर्म्मनिवृत्तिहेतुत्वाद् विद्योदयौपयिकत्वं पश्यन्ति। निवृत्ति-कर्म्मजनिताद् विद्यातिशयात् प्रवृत्तिकर्म्मजनिता विषयवासना अधर्म्मा आत्मनो विहीयन्ते। आतश्चैष आत्मा स्वीयधर्म्मोदयात् स्वतन्त्रो भवति। आत्मनः सच्चिदानन्दस्वाभाव्यात् स्वधर्म्मवशाद् मृत्युरूपेण विनाशेन जाड्येन दुःखेन चाधर्म्मेणायमुन्मुच्यते। तदर्थं धर्म्मबुद्धियोगप्रकारप्रकाशिका आर्षविद्योप-युज्यते। सैषा गीतायां चतुर्थी विद्या॥४॥

इत्थं चाविद्यया, अस्मितया, रागद्वेषाभ्यामभिनिवेशेन चायत्नसिद्धैः क्लेशैर्विक्लिष्टस्यात्मनः क्लेशानपगमयितुं ज्ञानैश्वर्य्यवैराग्यधर्म्मलक्षणा बुद्धियोगा अपेक्ष्यन्ते। तैश्च क्लेशलक्षणा अविद्याबुद्धि-योगा निवर्तन्ते, अव्ययपुरुषभक्तिभूतयोर्विद्याविद्ययोरुभयोः परस्परप्रतिद्वन्द्वित्वादविद्यातिशये विद्यायाः, विद्यातिशये चाविद्यायास्तिरोभावावश्यंभावात्।

इत्थञ्चात्मस्वरूपलक्षणशान्त्युदयोपायभूताया विद्याबुद्धेर्विद्याव्यये योगो विद्याबुद्धियोगः। क्लेशोदयोपायभूताया अविद्याबुद्धेरविद्याव्यये योगश्चाविद्याबुद्धियोगः। धर्म्मादिचतुष्टयमधर्म्मादिचतुष्टयं चैतयोर्बुद्धयोर्योगे हेतुः। बुद्ध्यात्मनैव द्वारेण कर्म्मात्मनोऽव्ययात्मनि विभागेनोपसत्तिर्भवति। तेनायं कर्म्मात्मा स्वेनैवात्मना बध्यते मुच्यते चेति बोध्यम्।

इदमत्रापरं बोध्यम्। आत्मनस्तावत् संसारयात्रानिर्वाहके द्वे साधने भवतः —धर्म्मो नीतिश्चेति। तत्र कीदृशोऽयं धर्म्मः कश्चाधर्म इति जिज्ञासायामिदमेव धर्म्मलक्षणं विद्यात्—यत् सर्वप्राणिसाधारणात्मनोऽस्याव्ययस्य स्वरूपधर्म्मा आनन्दविज्ञानमनोलक्षणविद्याः, ब्रह्मक्षत्रविड्लक्षणकर्म्माणि चेत्युभये यतः प्रकाशेन प्रवर्त्तन्ते, ता एताश्चतस्रो विद्याबुद्धय एवात्मस्वरूपधर्म्मोदयहेतुत्वाद् धर्म्माः। तद्विपर्ययभूतास्तु चतस्रोऽप्यविद्याबुद्धय आत्मस्वरूपधर्म्मावरणत्वादधर्म्माः। अपि चैतदात्मधर्म्मोदयहेतुभूतानि कर्म्माणि धर्म्माः। तद्विपर्ययाद्धर्म्मावरणहेतुभूतानि कर्म्माणि चाधर्म्माः। विश्वात्मन एकत्वाद् विश्वात्मापेक्षं शान्त्यानन्दोदयहेतुभूतानि कर्म्माणि धर्म्माः। एकस्य जीवात्मनस्तु विश्वात्मखण्डभूतस्यात्यल्परूपतया तदपेक्षं शान्त्यानन्दोदयहेतुभूतानि कर्म्माणि परात्मव्याघातकत्वे सत्यधर्म्माः। एकावयवसाधकत्वेऽप्यपरावयवबाधकानां कर्म्मणामात्मस्वरूपधर्म्मानन्दप्रतिबन्धकत्वात्। अत एव नैतिकास्तत्तद्व्यक्तिस्वार्थपरायणा अहर्निशमत्यन्ताध्यवसायव्यवसायपरायणा अपि नितान्तमशान्तात्मानो दुःखभाज एव दृश्यन्ते। स्वप्नेऽपि तेषां स्वास्थ्यं नास्ति। अभ्यासपारवश्यात्तु ते दुःखमयमेव जीवनमानन्दमयत्वेन परिकल्प्य संतुष्यन्ति—इत्यन्यदेतत्।

ते हीमे नैतिका एकैकजीवस्यातिक्षुद्रं स्वार्थं संसाधयितुं परमेणायासने परान् बहूनपि जनानापीडयितुमहर्निशं प्रयतन्ते तदर्थं चाहर्निशं व्यग्रा भवन्ति। "आत्मोदयः परग्लानिर्नीतिरित्यभिधीयते" इति निष्ठामातिष्ठमानाः परग्लानिपूर्वकमात्मोदयमिच्छन्तोऽन्योन्यं परग्लानिविधानव्यापारवशाद् विश्वस्मिन्नशान्तिं संचारयन्ति, परस्परमनोमालिन्यं विद्रोहं परिवर्द्धयन्ति। शान्तीच्छया नीतिं निम्र्मापयन्ति, अशान्तिं तु सर्वतो व्यवसाययन्ति। तस्माद्धर्म्मविरुद्धां नीतिमातिष्ठमाना अवराः साधारणा नातितरां विश्वासयोग्याः स्युः॥

**"अधर्म्मेणैधते राजन् ततो भद्राणि पश्यति।**
**ततः सपत्नान् जयति समूलस्तु विनश्यति॥"**

अथ पुनर्धार्म्मिका एते विश्वव्यापिनमेकमेवात्मानं स्वशरीरेऽपि प्रविष्टं पश्यन्तो विश्वस्मिन् सर्वत्र शान्तिसंभवेनैव स्वात्मनि सुखोदयसंभवं धारयन्तो निःस्वार्थं विश्वार्थं कर्म्मसु प्रवर्तन्ते। नैतिकानां कर्म्माणि भूतमात्राप्रवणानि। धार्म्मिकाणां तु कर्म्माणि प्राणप्रवणानि प्राणलाभार्थमेवैतेषु भुतेषु क्वचिदिव संसज्जन्ते। बहिरङ्गबलसाधनप्रवणानां नैतिकानां भूमिधनशस्त्रादितुच्छलाभः पुरुषार्थः। अन्तरङ्गबलसंसाधनप्रवणानां तु धार्म्मिकाणामात्मबलसंपत्तये स्वात्मनि दैवतलाभो विशिष्टः पुरुषार्थः। भूतबला नैतिकाः, प्राणबला धार्म्मिकाः॥

अपि च पार्थिवाधिभौतिकपदार्थसाधितैहलौकिकमात्रसुखसंसाधनं नीतिमार्गः। दिव्याधिदैविकपदार्थसाधितैहलौकिकपारलौकिकोभयविधसुखसंसाधनं धर्म्ममार्गः। परावनतिसंसाधनं कृत्वा तावतैव स्वोन्नतिसंसाधनाभिमानो नीतिमार्गः। स्वोन्नतिसंसाधनं कृत्वा तावता परावनतिसाधनं धर्म्ममार्गः। अष्टविधे धर्म्ममार्गे नीतिमार्गोऽप्येकोऽन्तर्भाव्यते। अष्टविधे च नीतिमार्गे धर्म्ममार्गोऽप्येकोऽन्तर्भाव्यते। तदेतदन्यत्र ब्रह्मविज्ञानादौ वैशद्येनोपपादितं द्रष्टव्यम्।

इति धर्म्मबुद्धियोगः।

**इति विषयरहस्ये बुद्धियोगविद्यारहस्यम्।**

# अथ गीतोपनिषत्कारिका

## तत्रादौ विद्याचातुर्विध्याद् उपनिषच्चातुर्विध्यम्

(१) तत्कर्म्मविषयकश्रद्धानोपपादिका विद्या तदुपनिषत्। सा चेह गीतायां चतुर्विधा—[१]कर्म्मयोगनिष्ठा, [२]ज्ञानयोगनिष्ठा, [३]भक्तियोगनिष्ठा, [४]बुद्धियोगनिष्ठा च। [१]लौकिकवैदिकनित्यकाम्यसर्वविधकर्म्मैकान्तारम्भोपपादिका विद्या कर्म्मयोगोपनिषत्, तत्रैतस्मिन् कर्म्मारम्भे योगशब्दः। [२]लौकिकवैदिकनित्यकाम्यसर्वविधकर्म्मैकान्तसंन्यासोपपादिका विद्या ज्ञानयोगोपनिषत्, तत्रैतस्मिन् कर्म्मसंन्यासे सांख्यशब्दः। [३]अथ निष्कामं सकामं वा परमेश्वरशरणागतिसाधनोपासनाकर्म्मप्रवणता भक्तियोगोपनिषत्। तत्रैतस्मिन् कर्म्मारम्भे उपासना शब्दः। [४]काम्यकर्म्मफलासक्तिसंन्यासपूर्विका सर्वविधशुभकर्म्मारम्भोपपादिका विद्या बुद्धियोगोपनिषत्, तत्रैतस्मिन् सांख्ययोगैकत्वेऽपि योगशब्द एवेष्यते।

(२) तत्रैतस्या बुद्धियोगोपनिषदो द्वौ भागौ भवतः—सम्यग्दर्शनलक्षणस्तावदात्मप्रकाशावरणलक्षणवासनाकर्म्मसंन्यासरूपो ज्ञानयोगः प्रथमः। तदिदमारम्भकर्म्मजनितवासनाकर्म्मसंन्यासलक्षणं सांख्यमित्युच्यते, तन्निष्ठाः सांख्या नाम। अथ सम्यक्चारित्र्यलक्षणः सर्वविधात्मबलसिद्धिसमृद्धिरूपः कर्म्मयोग उत्तमः, स योग इत्युच्यते, तन्निष्ठा योगिनो नाम। सांख्यं च योगश्चेत्युभयं परस्परानुगृहीतं सदेकं शास्त्रं बुद्धियोगोपनिषत्। एकस्या एवैतस्या बुद्धियोगोपनिषदो वासनात्मककर्म्मैकान्तसंन्यासधर्मितया आत्मनित्यज्योतिर्लक्षणज्ञानोपपादितया च सांख्यत्वम्। अथ निष्कामसर्वविधकर्म्मैकान्तारम्भधर्मितया सर्वविधात्मबलसिद्धिसमृद्धिरूपतया च योगत्वम्।

(३) तथा चायं निष्कर्षः—

विश्वप्रवणतया सर्वविधप्रवृत्तकर्म्मकरणं कर्म्मयोगः ॥१॥
आत्मप्रवणतया प्रवृत्तनिवृत्तोभयविधकर्म्मसंन्यसनं ज्ञानयोगः ॥२॥
ईश्वरप्रवणतया प्रवृत्तनिवृत्तोभयविधकर्म्मकरणं भक्तियोगः ॥३॥
विश्वेश्वरात्मप्रवणतया सर्वविधनिवृत्तकर्म्मकरणं बुद्धियोगः ॥४॥

(४) आचार्य्यभेदात् त्वियं बुद्धियोगोपनिषच्चतुर्धा प्रतिपद्यते—भगवद्विद्या, सिद्धविद्या, राजविद्या, आर्षविद्या चेति। आसु प्रथमा तावद् भगवतैव श्रीकृष्णेन स्वोपज्ञमुपदिष्टा, तिस्रस्त्वन्या अन्यैः पुराणपुरुषैः काले काले प्रत्युपदिष्टा एवेह स्वाभिमतत्वेनादरार्थं स्वमतपुष्टचर्थं च भगवताऽनूद्य प्रदर्शिताः। तथा चेयं बुद्धियोगोपनिषच्चतुष्टयी भगवता गीतेतिकृत्वा भगवद्गीतोपनिषन्नामोच्यते। शास्त्रचतुष्टयं हीदमेकत्रोपसंगृह्य प्रदर्शितम्, तदिदमेकं गीताशास्त्रम्।

### अथ चतुरुपनिषत्सु चतुर्विंशत्युपनिषदः ।

#### तत्रादौ एकोपनिषत्कश्चातुर्विद्योपक्रमः ॥ (१)

१ ये चेह पामरा ये च विद्वांसो ये तपस्विनः।
येऽतिदीना ये दरिद्रा दुर्बलाः प्रबलाश्च ये ॥१॥

राजानो ये च सम्राजः स्वाराज्यमपि वा गताः।
सर्वे लोकाः प्रकृत्यैव शोकसंविग्नमानसाः ॥२॥

२ अज्ञानमन्यथाज्ञानं सम्यग्ज्ञानमिति त्रयम्।
अकर्मेति विकर्मेति सत्कर्मेति च यत् त्रयम् ॥३॥
तत्र सत्कर्मणः सम्यग्ज्ञानाच्चेह सुखोदयः।
अज्ञानादन्यथाज्ञानाद् विकर्म्माकर्म्मतो भयम् ॥४॥
सुखस्य हेतू द्वावेव चत्वारो दुःखहेतवः।
ततो लोका इमे सर्वे शोकसंतप्तमानसाः ॥५॥
सुखं लभन्ते नात्यन्तं यत्नवन्तोपि जन्मतः।
अनिच्छतामयत्नानामायान्ति स्वयमापदः ॥६॥
शोकस्थानसहस्राणि भयस्थानशतानि च।
चक्रवत् पुनरायान्ति स्वयमेव दिवानिशम् ॥७॥
एषामेव तु शोकानामेकान्तध्वंसहेतवे।
एकान्तकरुणामूर्तिः कृष्णो गीतामुवाच ह ॥८॥
तत्र प्राकृतिकः शोको यथा प्राणिषु जायते।
युद्धप्रसङ्गे संविग्ने दर्शितं तदिहार्जुने ॥९॥
उदाहृत्यार्जुनस्यैतं शोकं युद्धप्रसङ्गजम्।
सर्वशोकप्रशमनं विद्योपायमुपादिशत् ॥१०॥
तदित्थं लोककल्याणहेतवे भगवानयम्।
लोकवृत्तं प्रदर्श्याग्रे सुखोपायमुपादिशत् ॥११॥

३ या लोकवृत्तोपनिषद् गीताया अस्त्युपक्रमे।
तत्रोपदेशौ द्वौ कल्प्यौ ततोऽन्यत्तद्विजृम्भणम् ॥१२॥
अविद्याकल्पितः[1] शोको नात्मधर्म्मः स विद्यते।
स आगतः स्वयं तद्वत् स्वयमेव गमिष्यति ॥१३॥
तीव्रवायोर्यथाघातः क्षम्यते पथि गच्छता।
एवमज्ञानजः शोक उपेक्ष्यः क्षणिको हि सः ॥१४॥

४ अथ विद्योपासितव्या[2] विद्यानिष्ठस्य न क्वचित्।
शोकः समुद्भवत्येष विद्यायां यत्नवान् भव ॥१५॥
कदाचिदद्भुते दृष्टे दृष्टचुत्कण्ठाति जायते।
भूयो द्रष्टुर्न सोदेति शोको न विदुषस्तथा ॥१६॥
एतावेवोपदेशौ द्वौ गीतायां परिनिष्ठितौ।
तयोरेवोपपत्त्यर्थं सर्वा गीता प्रवर्त्तते ॥१७॥

५ तावेताविङ्गयन्नेव भगवान् पार्थमादिशत्।
**'क्लैब्यं मा स्म गमः पार्थ' 'त्यक्त्वोत्तिष्ठ परंतप'** ॥१८॥
**'गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः'**।
शोकहेतुरविद्यैव विद्या शोकापहारिणी ॥१९॥

शोकप्रसङ्गाभावेऽपि बालो रोदित्यविद्यया।
तद्विद्यां कथयन्नेव पिता शोकं व्यपोहति ॥२०॥

६ क्रियामुपासनां ज्ञानं पुरुषार्थतया नराः।
आतिष्ठमाना लोकेऽस्मिन् प्रवृत्ताः सन्ति भिन्नवत् ॥२१॥
तेषां रुचिवशाल्लोके योग आसीत् त्रिधा पुरा।
कर्म्मयोगो भक्तियोगो ज्ञानयोग इति क्रमात् ॥२२॥
ते चैते न प्रपश्यन्ति सिद्धिं स्वेतरयोगतः।
परस्परं विद्विषन्तः सर्वे ते भ्रान्तिमागताः ॥२३॥
गर्हणात् संशयं प्राप्य न निष्ठां यान्ति कुत्रचित्।
'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति' ॥२४॥

७ ततः पथिपरिभ्रष्टान् क्लिष्टान्नष्टमतीन् जनान्।
अनुग्रहीतुं भगवान् गीतामुपदिदेश ह ॥२५॥
तत्रायं भक्तियोगस्तु नात्यन्तं प्रतिषिध्यते।
क्लेशासहेभ्यो ह्यज्ञेभ्यो भक्तिरेवोपयुज्यते ॥२६॥
**अपि चेत् सुदुराचारो भजते मामनन्यभाक्।**
**साधुरेव स मन्तव्यः सम्यग् व्यवसितो हि सः ॥२७॥**
विशिष्टेभ्योऽधिकारिभ्यो बुद्धियोगमुपादिशत्।
**'बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव'** ॥२८॥
**'दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय'**।
**'बुद्धियुक्तो जहातीह उभे सुकृत-दुष्कृते'** ॥२९॥

८ **'सांख्य-योगौ पृथग् बालाः प्रवदन्ति न पण्डिताः'**।
**'एकं सांख्यं च योगं च यः पश्यति स पश्यति'** ॥३०॥
एषा विद्या, तत्र निष्ठा येषामेकान्ततो भवेत्।
तेषु शोका न जायन्ते इत्याह भगवान् स्वयम् ॥३१॥

(१) स्वार्थपराणां बुद्धियोगनिरपेक्षत्वादवैज्ञानिक्यो लौकिकदृष्ट्या सिद्धाः प्रवृत्तिनिमित्त-सिद्धान्तलक्षणा लोकयात्रानिष्ठास्तिस्रः—इति प्राचां सिद्धान्तः।

१ ज्ञानयोगनिष्ठा अव्यक्ताक्षरपरा—
कर्म्मसंन्यासलक्षणं सांख्यं सांख्यानाम्।
२ कर्म्मयोगनिष्ठा विश्वलक्षणव्यक्तक्षरपरा—
स्वार्थसाधनलक्षणो योगो योगक्षेमपराणाम्
३ भक्तियोगनिष्ठा नानादेवतोपासनापरा—
कर्म्मसमुच्चितज्ञानलक्षणा भक्तिर्मध्यमानाम्

सैषा त्रिविधापि निष्ठा शोकसंतापहेतुः। विद्यावैकल्यादविद्याया दुःखहेतुत्वात्, तस्मात् सा गीतायां विगर्हिता निराकृताऽस्तीत्युपेक्ष्या।

(२) अथ परमार्थपराणां बुद्धयोगसापेक्षाणां वैज्ञानिक्यो वैदिकदृष्ट्या सिद्धा लोकयात्रानिष्ठा-श्चतस्रो द्रष्टव्याः—इति गीतासिद्धान्तः

१ ज्ञानयोगनिष्ठा=ज्ञानलक्षणबुद्धियोगिनी । अत्र परमाव्यये विद्याबुद्धेर्योगः ।
२ कर्म्मयोगनिष्ठा=धर्म्मलक्षणबुद्धियोगिनी । अत्रे जीवाव्यये विद्याबुद्धेर्योगः ।
३ भक्तियोगनिष्ठा=ऐश्वर्यलक्षणबुद्धियोगिनी । अत्रेश्वराव्यये विद्याबुद्धेर्योगः ।
४ बुद्धियोगनिष्ठा=वैराग्यलक्षणबुद्धियोगिनी । अत्र सर्वाव्ययसमत्वेन विद्याबुद्धेर्योगः ।

सैषा निष्ठाचतुष्टयी शोकसंतापोच्छेदहेतुः, विद्यायुक्तत्वाद्, विद्यायाः सर्व-दुःखात्यन्तविध्वंसे हेतुत्वात् । इति ।

## अष्टोपनिषद् राजर्षिविद्या (८)

ज्ञानयोगे कर्म्मरोधान्नैष्कर्म्ये शुद्ध आत्मनि ।
तनोरनित्यभाक्तत्वादनुशोको निषिध्यते ॥१॥
कर्म्मणां बन्धनत्वे तु हेतुताऽऽसङ्गकामयोः ।
तस्मात्तयोः कर्म्मयोगे परित्यागो विधीयते ॥२॥
ज्ञानयोगेऽपि नित्यानां यज्ञदानादिरूपिणाम् ।
एकान्ततः कर्म्मणां तु परित्यागो निषिध्यते ॥३॥
कर्मयोगेऽपि केषांचिद् बुद्धियोगविरोधिनाम् ।
एकान्ततः कर्म्मणां तु परित्यागो विधीयते ॥४॥
सनातनोऽस्ति राजर्षिपारम्पर्य्यक्रमागतः ।
वैराग्यबुद्धियोगोऽयं श्रीकृष्णेन प्रवर्तितः ॥५॥
ज्ञानयोगे कर्म्मयोगे बुद्धियोगाविरोधिनः ।
ये के च धर्मास्तेषां तु परित्यागो निषिध्यते ॥६॥
बुद्धियोगः कर्म्मयोगज्ञानयोगोभयात्मकः ।
आसक्तिकामसंन्यासादारम्भात् सर्वकर्म्मणाम्॥७॥
साधको बुद्धियोगस्य यावानेवोपपद्यते ।
न तस्य कर्म्मयोगस्य परित्यागो विधीयते ॥८॥

# राजर्षिविद्यायामष्टोपनिषदः ।

१—साङ्ख्यानां ज्ञानयोगे शरीरोदयहेतुकर्मैकान्त्यसंन्यासादात्मनोऽशरीरत्वसिद्धान्ताद् युद्धे शरीरक्षयनिमित्तोऽनुशोको नावकल्पते ।१।

२—कामिनामासक्तानामेवानुशोकोदयस्वाभाव्यात् कामासक्तिपरित्यागिनां कर्म्मयोगेऽप्यनुशोको नावकल्पते ।२।

३—बुद्धियोगिनां ज्ञानयोगे यज्ञतपोदानादीनां नित्यानां स्वकर्मणां परित्यागो नास्तीति स्वकर्मभूते युद्धे शरीरक्षयनिमित्तोऽनुशोको नावकल्पते ।३।

४—बुद्धियोगिनां कर्मसंन्यासविरोधिनामपि सिद्धान्ते बुद्धियोगप्रतिकूलानां कर्मणां संन्यासोऽभ्युपगम्यते ।४।

५—बुद्धियोगानुकूलानां तु धर्माणां सर्वत्र कर्मयोगे ज्ञानयोगे भक्तियोगे वा संन्यासो नेष्यते ।५।

६—सर्वकर्मविधानादेशात् सर्वकर्मसु कामासक्तिसंन्यासादेशाच्चायं बुद्धियोगः कर्मयोग-ज्ञानयोगोभयात्मको द्रष्टव्यः । सांख्ययोगयोरैक्यं बुद्धियोगः ।६।

७—बुद्धियोगसाधनस्य तु कर्मयोगस्य संन्यासो नेष्यते ।७।

८—समत्वयोगलक्षणोऽयं वैराग्यबुद्धियोगः पुरा युगे भगवता प्रवर्तितो राजर्षिवंशपरम्पराक्रमागतत्वात्सनातनो विज्ञायते ।८।

## अव्ययात्मविषयिणी ज्ञानविज्ञानोपनिषद्द्वयी सिद्धविद्या (२)

(१) अथास्यां सिद्धविद्यायां भवत्युपनिषद्द्वयी ।
[1]ज्ञानोपनिषदस्त्याद्या [2]विज्ञानोपनिषत् परा ॥१॥
अनेकेषां यदेकत्वानुगमो [1]ज्ञानमस्ति तत् ॥
जीवाव्ययानां परमाव्ययाभेदात् तदेकता ॥२॥
[2]विज्ञानं पुनरेकस्य नानात्वेनोपपादनम् ।
एकस्यानेककार्य्यत्वमेकस्य बहुषु स्थितिः ॥३॥
अधियज्ञं चाधिभूतमध्यात्मं चाधिदैवतम् ।
एतच्चतुष्टयं ब्रह्मकर्म्मणी गतिरात्मनः ॥४॥
विज्ञानसप्तकं ह्येतद् वैशद्येनोपपादितम् ।
ब्रह्मत्वे शुद्धकर्म्मत्वे यज्ञभूतात्मदैवते ॥५॥
एक एवाव्ययः सोऽयमित्थं षोढा प्रदर्श्यते ।
विज्ञानतो ज्ञानतश्च पश्यन् पश्यति सोऽव्ययम् ॥६॥

| | |
|---|---|
| १ विज्ञानोपनिषत् | ब्रह्मविज्ञानम्<br>कर्म्मविज्ञानम्<br>अधिदैवतविज्ञानम्<br>अध्यात्मविज्ञानम्<br>अधिभूतविज्ञानम्<br>अधियज्ञविज्ञानम्<br>जीवात्मगतिविज्ञानम् |
| २ ज्ञानोपनिषत् | ब्रह्मणि[1], कर्म्मणि[2] ।<br>अधिदैवतम्[3], अध्यात्मम्[4] ।<br>अधिभूतम्[5], अधियज्ञम्[6] । |
| | विततानामेषां षण्णामव्ययानां परमेणाव्ययेनाभेदादेकत्वम् । |

## उपनिषत्त्रयी राजविद्या (३)

अथास्यां राजविद्यायां भवत्युपनिषत्त्रयी ।
ज्ञानोपनिषदेवाद्या विज्ञानोपनिषत्परा ॥१॥
उपासना चेश्वरस्य तृतीयोपनिषत्त्विह ।
जीवानामीश्वरात् सृष्टिर्यद्वा तत्प्रतिबिम्बता ॥२॥
सिद्धास्तु ज्ञानविज्ञाने पश्यन्त्यव्ययमूलके ।
अथ राजकुले त्वेते उभे ईश्वरमूलके ॥३॥
अव्ययज्ञानविज्ञाने भिद्येते जीववर्ष्मणि ।
जीवाव्ययोऽयं जीवात्मा परिच्छिन्नः शरीरतः ॥४॥

ईश्वरज्ञानविज्ञाने भिद्येते जीववर्ष्मणि ।
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' ॥५॥
अन्यो जीवश्चिदंशोऽहमीश्वरात् सृज्यते पृथक् ।
शरीरयष्टिं कृत्स्नां स व्याप्नुवन् हृदि तिष्ठति ॥६॥
अन्य आत्मा चिदाभासः प्रतिबिम्बतया हृदि ।
ओमित्युक्तो जीवयुक्त ईश्वरः प्रतिपद्यते ॥७॥
चिदंशोऽहं चिदाभासस्त्वोम्—उभावैश्वरेऽहनि ।
कुर्वेऽहमन्यत्स्वे तन्त्रे शरीरे कुरुतेन्यदोम् ॥८॥
स्वे कर्म्मणि स्वतन्त्रोऽहं परतन्त्रोऽस्मि चैश्वरे ।
लिप्यते बध्यते जीवः स्वातन्त्र्यकृतकर्म्मणा ॥९॥

**"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥१॥
समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥२॥"**

भोगायतनमारूढौ द्वौ सुपर्णौ कलेवरम् ।
जीवेश्वरौ तत्र जीवो भोक्ताऽन्यस्त्वस्य रक्षकः ॥१॥
षडूर्म्मियुक् त्रिभिस्तापैर्जीवोऽशक्तः स शोचति ।
दृष्ट्वेशमहिमानं तु वीतशोकः स जायते ॥२॥
अथेश्वरमहत्यस्मिन्नक्षरं चेत् स पश्यति ।
विधूतपुण्यपापः सन्नीश्वरे समतामियात् ॥३॥
तदा भूतात्मनस्तस्य मनोवाक्प्राणरूपिणः ।
प्राणः प्राणैः सर्वभूतानुस्यूतैरेकतामियात् ॥४॥
स जीवात्मेश्वरात्मानमात्मन्येवानुपश्यति ।
[1]सत्येन तपसा सम्यग्ज्ञानेन ब्रह्मचर्य्यतः ॥५॥
ईशसत्याक्षरेऽनन्तजीवसत्याक्षरोच्चयाः ।
प्रोताः सन्त्यंशुवत् सोऽतः सत्यः सत्येन लभ्यते ॥६॥
प्रत्येति नेश्वरं स्वस्मिन् जीवात्मा तमसावृतः ॥
ज्ञानेन शुद्धसत्त्वः सन् सत्यं पश्यति निष्कलम् ॥७॥
चैतन्यमक्षरं सत्यं बुद्धौ मनसि बिम्बितम् ।
चित्तं तेन मनोयोगतपसा वेद्यमक्षरम् ॥८॥
[2]मनोबुद्धिस्थिते चित्ते चिदाभासे हि पञ्चधा ।
प्राणो विवेश तैः प्राणैश्चित्तमोतमशेषतः ॥९॥

---

[1] **सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥** मु० ३।१।५

[2] **एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।
प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ॥** मु० ३।१।९

चित्ते शुद्धे ततः प्राणो विभवत्येष आत्मना ।
सर्वजीवचिदाभासचित्तप्राणेष्वभिन्नवत् ॥१०॥
सर्वभूतगतैः प्राणैरेकीभवति सर्वथा ।
तेनास्य कामचारः स्याद् यद् यथेच्छति तस्य तत् ॥११॥
अध्यात्ममित्थं व्याख्यातं तद्वदेवाधिदैवतम् ।
जीवेश्वरौ हि तावेतावारूढौ विश्वपादपे ॥१२॥
सर्वे जीवाव्यया अन्तेऽपियन्तीहेश्वराव्यये ।
किन्त्वीश्वराव्ययो जीवे तिष्ठन्नपि न तिष्ठति ॥१३॥
प्रकृतिद्वयसम्पन्नः पुरुषोऽव्यय ईश्वरः ।
योगेन च विभूत्या च विश्वव्याप्त उपास्यताम् ॥१४॥
तदित्थं ज्ञानविज्ञानोपासनाभिः स ईश्वरः ।
दृष्टो विशुद्धं तं जीवमनुगृह्णात्यभिन्नवत् ॥१५॥
न शक्यं सिद्धविद्यायामियमेवमुपासना ।
निस्त्रैगुण्याच्च नैष्कर्म्यात् तत्रैकात्म्यं हि सिद्ध्यति ॥१६॥
सर्वधर्म्मोपपन्नस्य विद्यायामीश्वरस्य तु ।
विशिष्टात्मा विशिष्टात्मन्युपास्ते पृथगात्मना ॥१७॥
तत्र जीवोऽयमवरः परस्मिन् भक्तिरिष्यते ।
आत्मानमर्पयन् जीवः कुरुते भक्तिमीश्वरे ॥१८॥
इत्थमैश्वर्य्यविद्यायामीश्वराराधना विधिः ।
[1]उपासना [2]च विज्ञानं [3]ज्ञानमस्योपदिश्यते ॥१९॥

१ ईश्वरलक्षणादेकस्माच्चिद्घनाज्जीवलक्षणा अनन्ताश्चिदाभासाः पात्रस्थजलप्रतिविम्बित-सूर्य्यवत् पृथगायतनाः पृथङ्नानाधर्म्मा ईश्वरचिदंशमूलाः पृथगिवोत्पद्यन्ते—इति विज्ञानोपनिषद् ॥१॥

२ अथ चिदाभासलक्षणेषु सर्वेषु जीवेषु प्रतिबिम्बेषु सूर्य्यवदेक एवायं विश्वव्यापीश्वरश्चिदात्मा सर्वत्राभेदेन ह्यभिव्याप्नोतीति कृत्वा एकेश्वराभिन्नतया 'तदभिन्नाभिन्नस्य तदभेदसिद्धान्तात्' सर्वेषां जीवानां परस्परैकत्वसिद्धिरिति ज्ञानोपनिषत् ॥२॥

३ बलमयी ब्राह्मी माया ईश्वराव्ययोपाधिः ।
गुणमयी दैवी माया जीवाव्ययोपाधिः । स जीवस्तमीश्वरं स्वस्मिन्नभेदेन पश्यन्नुपास्ते, अथैकीभवतीत्युपासनोपनिषत् ॥३॥

### सप्तोपनिषत्का आर्षविद्या (४)

अथातो धर्म्मविद्यायां सप्तोपनिषदः स्मृताः ।
[1]विज्ञानषट्कं [2] त्रैगुण्यं [3]ब्रह्माश्वत्थनिरूपणम् ॥१॥
[4]दैवतासुरसंपत्तिः प्रचयो [5]गुणकर्म्मणोः ।
[6]अत्याज्यकर्म्मोपनिषत् [7]कर्म्मानावरणं च यत् ॥२॥
इति सप्तोपनिषदः साधूपदिशता सता ।
आत्मनो गुणकर्म्मभ्यां धर्म्मरूपं परिष्कृतम् ॥३॥

| १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|
| क्षेत्र–क्षेत्रज्ञौ<br>ज्ञान–ज्ञेयौ<br>प्रकृति–पुरुषौ | १ सत्त्वम्<br>२ रजः<br>३ तमः | १ अमृतब्रह्म-शुक्रमयो ब्रह्माश्वत्थः<br>२ क्लेश-कर्म्म-विपाकाशयमयः कर्म्माश्वत्थः | १ दैवी संपत्<br>२ आसुरी सम्पत् | १ { आत्मावरण-हेतुस्त्रैगुण्य-मयी– योगमाया<br>२ { कर्म्ममयी योगमाया | { अत्याज्य कर्म्माणि | अनावरक कर्म्माणि |
| इतिषड्विज्ञानानि | इति त्रैगुण्यम् | | | | | |
| ५ | ३ | ६ | ३ | ५ | ३ | ३ |

(१) [१]क्षेत्र-[२]क्षेत्रज्ञयोर्ज्ञान[४]-ज्ञेययोः[५]प्रकृतेरपि ।
पुरुषस्येति विज्ञानषट्कमत्र विवेचितम् ॥४॥

(२) अव्ययब्रह्मणो योनिर्महद्ब्रह्म त्रयो गुणाः ।
महत्यपूर्वं श्रयतेऽव्ययं तन्महदुच्यते ॥५॥

(३) अथ चाश्वत्थविज्ञानं तत्राश्वत्थोऽयमव्ययः ।
ब्रह्माश्वत्थस्त्रिगुणवान् कर्म्माश्वत्थश्च जायते ॥६॥

(४) देवासुरकृते सर्गे स्युर्देवासुरसंपदः ।
निसर्गाद्वा जन्मसिद्धात् संस्काराद्वाधिकारिकात् ॥७॥

(५) त्रैगुण्यप्रचयो लोके सर्वभावेषु दृश्यते ।
'दैवी ह्येषा गुणमयी मम माया दुरत्यया' ॥८॥
'त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्' ॥९॥
'कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' ।
'गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति' ॥१०॥
'गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते' ॥११॥
'उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते' ॥१२॥
तस्मै गुणात्ययायात्र त्रैगुण्योपनिषत् पृथक् ।
उपदिष्टा गुणानेतान् परीक्ष्यात्येतुमर्हति ॥१३॥

(६) अथ कर्म्माणि लोकेऽस्मिन् सन्ति त्याज्यानि कानिचित् ।
तथाभ्युदयहेतुत्वादत्याज्यानि च कानिचित् ॥१४॥
अपि चात्याज्यकर्म्माणि त्यजन्त्यज्ञानिनः क्वचित् ।
ततस्ते कर्म्मविभ्रष्टा दुःखभाजो न संशयः ॥१५॥
अत्याज्यकर्म्मोपनिषत् तदर्थमुपदिश्यते ।
अत्याज्यं कर्म्म निश्चित्य सदोषमपि न त्यजेत् ॥१६॥

(७) अथ नात्मावरकता कृतानामपि कर्म्मणाम् ।
कुरुते यदि कर्म्माणि कामासक्ती परित्यजन् ॥१७॥
ब्रह्मवित् सर्वभूतेषु लभते भक्तिमात्मनः ।
भक्त्या सोऽव्ययमात्मानमभिजानाति तत्त्ववित् ॥१८॥
जीवाव्ययप्रसादेन प्राप्नोति परमाव्ययम् ।
ततो नावरकत्वं स्यात् कृतानामपि कर्म्मणाम् ॥१९॥

**उपनिषत्त्रयी विद्योपसंहारः ।**

अथ विद्योपसंहारे भवत्युपनिषत्त्रयी ।
[१]विद्योद्धारोऽथ चोद्धारो[२]द्धारो [३]गीताफलश्रुतिः ॥१॥
अपि चात्रोपसंहारेऽस्त्युपदेशाष्टकं परम् ।
[४]चतुष्कमेकं[१] [३]त्रितयं ततो गीता समाप्यते ॥२॥
तत्र वैराग्यविद्याया आत्मनिर्भरतेष्यते ।
आत्मप्रसादात् कृच्छ्राणि तरत्यात्मपरायणः ॥३॥

| |
|---|
| चतुरुपदेशा—<br>१—विद्योद्धारोपनिषत् । |
| एकोपदेशा—<br>२—उद्धारोद्धारोपनिषत् । |
| त्र्युपदेशा—<br>३—गीताफलश्रुत्युपनिषत् । |

इति गीतोपनिषत्कारिका समाप्ता ॥

# अथ गीताविषयरहस्ये गीतोपदेशानुक्रमणिका

## अथ गीतायां विद्योपदेशविभागाः

| | | | | | | |
|---|---|---|---|---|---|---|
| ० | ९ | २ | ३ | ४ | ० | विद्यायाम् |
| १ | ८ | २ | ३ | ७ | ३ | उपनिषत्सु |
| २ | ५० | १९ | ३२ | ४९ | ८ | उपदेशाः |

उपदेशा इहादौ[२] द्वौ [५०]पञ्चाशच्चोनविंशतिः[१९] ।
[३२]द्वात्रिंशच्चोनपञ्चाशत्[४९] ततोऽष्टा[८]वुपसंहृतौ ॥१॥
तदित्थमुपदेशानामिह षष्ट्यधिकं शतम् । (१६०)
ते चोपदेशाः संक्षेपाद् दर्श्यन्तेऽनुक्रमादिह ॥२॥

**चातुर्विद्योपक्रमे चातुर्विद्योपदेशप्रसङ्गोत्थानिकोपनिषत्**

१ प्राकृतिकशोकसमुत्थानमात्मन्यौपाधिको धर्म्मः ।

२ प्राकृतिकशोकव्युत्थानाय शोकव्युत्थानौपयिकविद्याबुद्धियोगः संपादयितव्यः ।

### १—प्रथमायां राजर्षिविद्यायाम्

**१—कर्म्मपरित्यागहेतुभूतात्मशरीरवियोगानुशोकानौचित्योपनिषत् ।**

१ सर्वविधकर्म्मातीत-नित्य-शुद्धबुद्धमुक्तासङ्गस्याव्ययस्यात्मनः शाश्वतिकतया शरीरपरिग्रह-परित्यागयोः प्रवाहनित्यत्वादेकस्यैव तस्यात्मनोऽनेकदेहधारित्वस्वाभाव्याद् देहत्यागभयानौचित्यम् । आतश्च देहत्यागानुशोकानौचित्यात् शरीरनाशकयुद्धादिकर्म्मपरित्यागानौचित्यम् ।

२ सति शरीरपरिग्रहे प्रज्ञामात्रा-प्राणमात्रा-भूतमात्रासंसर्गजनितस्य सुखदुःखादिप्रत्ययस्य नाप्राप्तत्वादौपसर्गिकत्वेनोपेक्ष्यत्वाच्चानुशोकानौचित्यम् ।

३ विनश्वरशरीरस्थस्याव्ययात्मनो नित्याविनाशित्वादनुशोकानौचित्यम् । विकुर्वाणशरीरस्थाव्ययात्मनो निर्विकारत्वादनुशोकानौचित्यम् ।

५ आत्मन्यव्यये क्षराक्षरसम्बन्धनिबन्धनस्य जन्ममृत्युपारम्पर्य्यस्य प्रवाहनित्यस्य नाप्राप्तत्वादुपेक्ष्यत्वादनुशोकानौचित्यम् ।

६ नित्यानित्यसंबन्धस्यानिर्वचनीयत्वादाश्चर्यमयत्वादनुशोकानौचित्यम् ।

७ अवश्यविनाशिनि देहेऽव्ययस्यात्मनोऽस्याविनाशित्वादनुशोकव्युत्थानोपदेशपूर्वकमनावेशेन कर्त्तव्यतोपदेशः ।

**२–शोकानुत्पत्तये कामासक्ति-संन्यासौचित्योपनिषत् ।**

१ बुद्धियोगाविरुद्धज्ञानयोगोपदेशानन्तरं विवक्षितस्य व्यवसायबुद्धिसमुच्चितकर्म्मयोगलक्षणस्य बुद्धियोगस्य प्रशंसा ।

२ बुद्धियोगप्रतिपन्थिनस्तु कर्म्मयोगस्य वैदिकस्यापि व्यवसायबुद्धिव्यतिरेकादनन्तशाखाविभक्तस्यैहिकामुष्मिकफलभोगौपयिकस्य त्रैगुण्यविषयप्रवृत्तिलक्षणतया कामाकुलत्वाद् दुःखानुविधायित्वम्, सान्तसातिशयफलत्वात् तुच्छत्वं च ।

३ कर्म्मफलवासनाया आसक्तिहेतुतया बन्धकत्वात् सकामकर्म्मयोगस्य दुःखानुविधायित्वम् । कर्म्मापरित्याग-फलवासनापरित्यागाभ्यामुपलक्षितस्यानासक्तिलक्षणस्य कर्म्मयोगस्य बुद्धियोगसमर्थकतया दुःखासंभिन्ननित्यनिरतिशयफलौपयिकत्वाच्छ्रेयस्त्वम् ।

४ स्थितप्रज्ञतालक्षणाया मोहव्यतितीर्णाया बुद्धेर्बुद्धियोगसिद्ध्युपायत्वम् ।

५ बुद्धियोगसिद्धिरूपायाः स्थितप्रज्ञताया लक्षणानि ।

६ विषयानुध्यानजनिताया वासनाया आसक्तिहेतुत्वाद् बुद्धियोगप्रतिबन्धकत्वम् ।

७ रागद्वेषशून्यैरिन्द्रियैर्विषयग्रहणमासक्तिहेतुर्न भवतीति बुद्ध्यावरणवासनानुदयाद् बुद्धिप्रसादे बुद्धियोगसिद्धिः । बुद्धियोगस्य कषायानुदयान्निर्म्मलबुद्धिरूपतया ब्रह्मस्थितिरूपत्वम् ।

**३–बुद्धियोगानुकूलकर्म्मसंन्यासानौचित्योपनिषत् ।**

१ सिद्धान्तरूपेण बुद्धियोगमतस्थापनार्थं कर्म्मयोग-कर्म्मसंन्यासयोः श्रेयस्त्वाश्रेयस्त्वपरीक्षारम्भः ।

२ नैष्कर्म्म्योपायत्वात्, कर्म्मसंन्यासवैयर्थ्यात्, प्रकृतिसिद्धत्वात्, जीवनयात्रानिर्वाहकत्वाच्च नाप्राप्तस्य कर्म्मणोऽनिवार्य्यत्वात् कर्म्मपरित्यागानौचित्यम् ।

३ यज्ञकर्म्मणोऽवश्यकर्तव्यत्वादबन्धनत्वाच्च परित्यागानौचित्यम् ।

४ आत्मारामस्यात्मपरायणस्य विषयानासक्तस्य बहिर्लोकयात्रायामुपेक्षाबुद्धौ अपेक्षाबुद्धिमूलकसंस्कारोदयासंभवादबन्धनस्यात्मज्ञानौपयिकस्य कर्म्मणः परित्यागानौचित्यम् ।

५ विद्वत्पामराद्युच्चावचसर्वविधलोकस्थितिनिर्वाहो लोकसंग्रहः । लोकसंग्रहकर्त्तव्यतादृष्ट्या कृतस्य कर्म्मणोऽनासक्तिहेतुत्वादबन्धनत्वात् परित्यागानौचित्यम् ।

६ आत्मातिरिक्ताया आत्मप्रकृतेः कर्म्माधिष्ठानत्वमध्यवस्यता ममत्वराहित्यात्कर्म्मफलानुसन्धानराहित्याच्चात्मनः कर्म्मण्यासक्तिबन्धनमपश्यता स्वभावसिद्धसहजकर्म्मणः परित्यागानौचित्यम् ।

७ कर्म्मपरित्यागानौचित्यस्य भागवतमतत्वप्रतिज्ञानम् ।

**४–बुद्धियोगप्रतिकूलकर्म्मसंन्यासौचित्योपनिषत् ।**

१ इन्द्रियधर्म्मत्वादनात्मधर्म्मयोः प्रकृत्यधिष्ठानयो रागद्वेषयोरासक्तिहेतुत्वाद् बुद्धियोगप्रतिपन्थितया परित्यागौचित्यम् ।

२ रागद्वेषात्मकयोः कामक्रोधयोरिन्द्रियमनोबुद्ध्यधिष्ठानयोरविद्याबुद्धिद्वारा प्रत्यगात्मावरणहेतुत्वादात्मविदूषकत्वाच्चात्मनो रागद्वेषपारवश्यं भवतीत्यनिष्टकर्म्माचरणे तत्प्रवृत्तिः ।

३ इन्द्रियमनोबुद्धिनिग्रहणस्यैव कामक्रोधविजयोपायत्वादात्मनि कामक्रोधासक्तिनिवर्तकत्वम् ॥

**५—बुद्धियोगस्य भगवन्मतसिद्धसनातनत्वोपनिषत् ।**

१ भगवन्मतसिद्धस्य वैराग्यौपयिकसमत्वलक्षणबुद्धियोगस्य राजर्षिपरम्परोपदेशसिद्धत्वात् सनातनधर्म्मत्वम् ।

२ बुद्धियोगविद्योपदेष्टुः कृष्णवासुदेवस्यानेकजन्मग्राहित्वम्, अच्युतभगवत्त्वाज्जातिस्मरत्वं च ।

३ जीवाव्ययस्यापि परमाव्ययैकीभावे प्रतिपन्ने संसृतिकर्म्मनाशेन जन्ममृत्युबन्धविनिर्मुक्तत्वमिति सिद्धान्तादस्य कृष्णस्य साक्षात्परमाव्ययपुरुषतया पुनर्जन्मासंभवेऽपि विश्वाधिकारसम्बन्धेनाधिकारिकत्वात् सति निमित्तविशेषे स्वेच्छयाऽनेकजन्मग्राहित्वम् । यावदधिकारमवस्थितिराधिकारिकाणामिति वैयासिकसूत्रसिद्धान्तात् ।

**६—बुद्धियोगाविरोधिनोः कर्म्मयोग-ज्ञानयोगयोरुपादेयतोपनिषत् ।**

१ ज्ञानयोग-भक्तियोग-कर्म्मयोगानां वा, अव्यक्तोपासनातत्तद्देवतोपासनानां वा, सर्वविधकर्म्मणामव्ययाश्रयादेव फलसिद्धिः ।

२ अव्ययस्यात्मनस्तत्तत्कर्म्मसु निर्लिप्तत्वं विजानद्भिश्चतुर्भिर्वर्णैः स्वधर्म्मबुद्धया कृतानां स्वकर्म्मणां बन्धकत्वाभावः ।

३ क्षोभरूपस्य तमोलक्षणस्य कर्म्मणोऽथ शान्तिरूपायाः प्रकाशलक्षणाया विद्यायाश्चान्योन्यमन्तरान्तरीभावं विजानता कृतानां विद्यासमुच्चितकर्म्मणां यज्ञतपोदानरूपाणां विद्यायोगप्रभावाद् बन्धकत्वाभावोऽस्तीति कृत्वा विद्यासमुच्चितकर्म्मयोगोपादेयताऽवधीयते ॥

४ अबन्धकत्वेनोक्तानि यज्ञार्थकर्म्माणि उदाहरणविधया त्रयोदशविधानि प्रदर्श्यन्ते । ब्रह्मार्पणयज्ञः, दैवयज्ञः, ब्रह्माग्नियज्ञः, संयमाग्नियज्ञः, इन्द्रियाग्नियज्ञः, योगाग्नियज्ञः, द्रव्ययज्ञः, तपोयज्ञः, योगयज्ञः, स्वाध्याययज्ञः, ज्ञानयज्ञः, प्राणायामयज्ञः, प्राणयज्ञश्चेति ॥

५ यज्ञेषु चेतरसर्वविधयज्ञापेक्षया कर्म्मक्षयलक्षणस्य ज्ञानयज्ञस्य श्रेष्ठत्वमस्तीति कृत्वा कर्म्माश्रितज्ञानयोगोपादेयताऽवधीयते ॥

**७—कामासक्तिसंन्यासोपलक्षित-कर्म्मारम्भणरूपस्य बुद्धियोगस्य ज्ञानयोगकर्म्मयोगोभयात्मकत्वोपनिषत् ।**

१ पूर्वं कर्म्मपरित्यागानौचित्याख्यानेन कर्म्मयोगोपदेशादिदानीं ज्ञानयज्ञश्रेष्ठत्वाख्यानेन कर्म्मसंन्यासोपदेशात् संशये प्रश्नः ।

२ कर्म्मयोग-कर्म्मसंन्यासयोः प्रत्येकं गुणदोषदर्शनादुभयोः समुच्चये विवक्षिते, कर्म्मयोगस्यैव कामसंन्यास-फलाभिसन्धिसंन्यासासक्तिसंन्यासेभ्यः संन्यासलक्षणज्ञानयोगत्वोपपत्त्या तयोर्भिन्नयोरप्यभिन्नत्वमास्थीयते । तथा च ज्ञानकर्म्मणोः समुच्चयादेकत्वेन भावितस्य बुद्धियोगस्य ज्ञानयोगत्वं च कर्म्मयोगत्वं चेति कृत्वा तादृशबुद्धियोगिनः प्रत्यगात्मनो लक्षणमन्वाख्यायते ।

३ नित्यशुद्धबुद्धमुक्तस्वभावस्यात्मनोऽव्ययस्य सोपसर्गानुपसर्गावस्थयोः संसारनिस्तारावस्थयोश्चैकरसत्वम् ।

४ बाह्यविषयसंयोगसुखापेक्षया आत्मरतिसुखस्य प्राशस्त्यम् ।

५ आत्मज्ञानेन सर्वकर्म्मपरिक्षयात् कर्म्मजनितसर्वद्वैतनिवर्त्तनाच्च ब्रह्मकैवल्यसिद्धिरित्यतस्तस्यात्मज्ञानिनोऽन्तराराामत्वम् ।

६ परमशान्त्युपायभूताया आत्मज्ञानसिद्धेरुपायभूतायां योगाभ्यासप्रक्रियायां निष्णातस्य सर्वदुःखोपशमलक्षणशान्तिसिद्धिः।

७ सर्वविधकर्म्मैकान्तपरित्यागस्यासंभवितया नैष्कर्म्यज्ञानयोगस्याशक्योदयत्वात् कर्म्मयोग एवोपादेयो न ज्ञानयोग इत्येके। कर्म्मयोगस्य रजस्तमोगुणयोगेन बन्धनहेतुत्वात् कर्म्मसंन्यासलक्षणो ज्ञानयोग एवोपादेयो न कर्म्मयोग इत्यपरे। इत्थं विरुद्धद्वैविध्ये कर्म्मफलाभिसन्धिसंन्यासेन संन्यासलक्षणज्ञानयोगव्यामिश्रितो निष्कामनिरासक्तिकृतकर्म्मयोगलक्षणो बुद्धियोग एवोपादेय इति सिद्धान्तः।

८ ज्ञानयोगेनात्मविजयस्य परमपुरुषार्थत्वादजितात्मना कृतस्य कामसंकल्पमयस्य कर्म्मयोगस्य दुःखानुविधायित्वम्।

९ कर्म्मयोगेन कर्म्मनिष्ठस्यापि ज्ञानयोगेन जितात्मनः सर्वत्र समबुद्धित्वमुदेतीत्येतस्याः समबुद्धितायाः पञ्चविधसाम्योपलक्षितबुद्धियोगोदयौपयिकतया प्राशस्त्यम्।

**८—बुद्धियोगसाधनकर्म्मयोगोपादेयतोपनिषत्।**

१ बुद्धियोगसिद्ध्युपायभूतं योगाभ्याससाधनम्।

२ योगाभ्याससाधने साधकबाधकौ।

३ बुद्धियोगसिद्धिलक्षणम्।

४ बुद्धियोगस्वरूपलक्षणम्।

५ बुद्धियोगानुष्ठानक्रमः।

६ बुद्धियोगसाधने समतानुध्यानाभ्यासक्रमः।

७ बुद्धियोगसिद्ध्यौपयिकमनःस्थिरतोपाये प्रश्नसमाधाने।

८ दैववशाद् योगभ्रष्टस्योदर्काख्यानम्।

९ कर्म्मयोगि-तपोयोगि-ज्ञानयोगिभ्यो बुद्धियोगिनोऽभ्यर्हितत्वम्। बुद्धियोगिष्वापि सामान्यभावुकापेक्षया श्रद्धावतः श्रेष्ठत्वम्।

**इति प्रथमायां वैराग्यविद्यायामष्टोपनिषत्सु पञ्चाशदुपदेशाः**

## २—द्वितीयस्यां सिद्धविद्यायाम्

**१—प्रकृत्यनवभासितपुरुषज्ञानोपनिषत्।**

१ योगविशुद्धेनान्तःकरणेन सर्वजगदाधारस्यैकस्याव्ययस्य साक्षात्काराय ज्ञानविज्ञानोपदेशोपक्रमः।

२ पुरुषस्याव्ययस्य परापरभेदात् प्रकृतिद्वैविध्यम्।

३ प्रकृतिविशिष्टस्याव्ययपुरुषस्यैतदशेषजगद्भावभावित्वम्।

४ एकस्यैवाव्ययपुरुषस्य परापरप्रकृतिवशाद् विभिन्नरूपत्वे पञ्चदशोदाहरणानि।

५ पुरुषप्रकृतिभूतस्य महतो गुणत्रयसमष्टिरूपतया गुणत्रयभेदात् त्रिधा भिन्नानां जगद्भावानामव्ययप्रकृतिसिद्धत्वादव्ययनिष्ठत्वम्।

६ गुणत्रयव्यतिरिक्तस्य गुणत्रयालम्बनस्यापरिणामिनो विशुद्धस्याव्ययपुरुषस्य त्रैगुण्यात्मकमायाप्रच्छन्नत्वात् तादृशगुणत्रयात्मकमायाप्रत्यन्तरितदृष्टिभिरासुरप्रकृतिभिर्दुष्कृतिभिरभास्यत्वम्। त्रैगुण्यात्मकमायावृत्तिप्राबल्येन ज्ञानसंवरणाद् ज्ञानमालिन्याद्वा तदव्ययस्यात्मनोऽप्रतिपत्तावपि तदव्ययार्पितमनोबुद्ध्याभासप्राबल्येन ज्ञानविकाशाद् ज्ञानवैमल्याद्वा तदव्ययात्मप्रकाशसंभवः।

७ अस्याव्ययपुरुषस्याराधनायाम्—आर्त्त-धनार्थि-जिज्ञासु-ज्ञानिनां चतुर्णां सुकृतिनां निसर्गतः **प्रवृत्तिरस्ति।** तेषु ज्ञानिनां श्रेष्ठतमत्वम्। ज्ञानात्मकत्वेनैवाव्ययस्य निर्द्धारितत्वाज् ज्ञानिनामव्ययसाक्षात्कारे संनिकर्षेण सौलभ्यात्।

८ महत्यव्ययचिदाभासस्य सत्त्वगुणतया सात्त्विकानां प्रतिबिम्बिताव्ययचिन्मयप्राणवतीष्वव्ययावलम्बितक्षराक्षरात्मिकासु विभिन्नतत्तद्देवतासूपासकानां तत्तद्देवताद्वारा परम्परया तदव्ययपुरुषप्रपत्तावपि साक्षादव्ययप्रपत्त्यपेक्षया मन्दफलावगाहित्वम्।

९ योगमायापहृतज्ञानतया साक्षादव्ययं पुरुषमनवगाहमानानामबुद्धीनामक्षराव्ययालम्बितक्षराक्षरात्मकदेवतामात्रोपासनाप्रवणत्वम्।

१० रागद्वेषद्वन्द्वमोहेन संमोहं गतानामव्ययाक्षरद्वन्द्वाविवेकात् केवलमेकमक्षरमेव प्रतिपद्यमानानां भूतभविष्यद्वर्तमानसर्वविधज्ञानजनकैतदव्ययपुरुषप्रतिपत्तिर्नोपपद्यते। पुण्यकर्म्मणां तु निष्कल्मषाणां रागद्वेषद्वन्द्वमोहापक्षयेऽव्ययात्मसाक्षात्कारसंभवात् तत्प्रभावात् त्रिकालदर्शित्वसंभवः।

## २—सप्तविज्ञानोपनिषत्।

१ अव्ययोपासकस्य ज्ञानिनोऽव्ययार्पितमनोबुद्धिप्रभावादक्षरक्षरविकारेष्वेतेषु जगद्भावेषु ब्रह्मकर्मणोस्तदुभययोगसिद्धस्य चाधिकरणचतुष्टयस्य देहावसाने परात्मन्यवरात्मगतेश्च विज्ञानसिद्धिः। अव्ययार्पितमनोबुद्धीनां योगिनां मनोबुद्धयोर्यावदव्ययं कामचारोपपत्तेः।

२ ब्रह्मकर्मणोरधिकरणचतुष्टयस्य च तावत्स्वरूपविज्ञाने संक्षिप्य समाधानानि।

३ गतिविज्ञानसमाधानाय तु सद्योमुक्तेः क्रममुक्तेर्लोकयातायातानां च विज्ञानेषु क्रमेण प्रतिपादनीयेषु प्रथमं तावत् सद्योमुक्तिलक्षणपरमगतेश्चतुर्धा व्युत्पादनम्। तथाहि "अन्ते मतिः सा गतिः" इति सिद्धान्तादव्ययार्पितमनोबुद्धीनां देहावसानकालेऽव्ययचिरानुभवाहितसंस्कारद्वाराऽव्ययानुगमादपुनरावृत्तिः।

४ अपि च देहावसानकाले योगाभ्यासप्रक्रिययाऽव्ययैकाग्रसमर्पितमनसाऽनुचिन्तयतः शरीरत्यागेऽव्ययप्रतिष्ठितत्वादपुनरावृत्तिः।

५ अपि च योगमार्गेणाव्ययोपासिनाम्—ओमित्येकाक्षरोच्चारणपूर्वकं तदनुस्मृतिमात्रपूर्वकं वा शरीरं त्यजताम्-ओमितिशब्दाक्षरोपस्थापितब्रह्माक्षरसेतुद्वाराऽव्ययपरिनिष्ठानादपुनरावृत्तिः।

६ अपि च—अनन्यचेतसाऽहर्निशमव्ययमनुचिन्तयतां जन्ममृत्युप्रवाहप्रयोजकहृद्ग्रन्थिबन्धविनिर्मोकाद् विदेहभूतस्य देहावसानेऽव्ययसायुज्यसंपत्तेरपुनरावृत्तिः।

७ इत्थं च—सर्वेषामेषां भूतविकाराणामुदयप्रलययोः प्रकृतिभूताऽव्यक्ताक्षरमात्रपर्य्यवसायितया प्रकृत्या पुनरावर्तित्वनियमेऽपि क्षराक्षराधिष्ठानाव्ययपुरुषेऽनन्यभक्तिवशादनुगतात्मनामपुनरावर्तित्वं सिद्धान्तः।

८ व्यक्तानामेषामशेषाणां भूतविकाराणामुदयप्रलययोरव्यक्ताक्षरमात्रपर्य्यवसायिनां तु स्वारसिकं पुनरावर्तित्वं सिद्धान्तः।

९ कर्म्मजनितवासनावच्छिन्नस्य चिदाभासरूपस्य प्रत्यगात्मनो विद्याकर्म्ममयतया तदुभयतारतम्योपपन्नाभ्यां देवयान-पितृयाणसंज्ञाभ्यां शुक्लकृष्णाभ्यां मार्गाभ्यां गतिं कुर्वतो विद्यातिशये क्रममुक्तिसिद्धेरपुनरावृत्तिः, कर्म्मप्राबल्ये तु पुनरावृत्तिः।

## ३—तृतीयस्यां राजविद्यायाम्

**१—सर्वैकप्रभवाव्ययज्ञानोपनिषत् ।**

१ अव्ययसाक्षात्कारौपयिकयोः कयोश्चिज्ज्ञानविज्ञानयोः पुरातनै राजवर्गैराविष्कृतत्वात् तैरद्य यावन्निगूहितत्वाच्च गुह्यराजविद्यात्वम् ।

२ भूतग्रामैरसङ्गिनोऽप्यस्याव्ययपुरुषस्य व्यक्ताव्यक्तप्रकृतिविकारविशेषे भूतग्रामेऽभिमानित्वेनानुस्यूतत्वाद् भूतसर्जनायाक्षरनियोजकत्वाच्च सर्वभूतस्रष्टृत्वं सर्वभूताधिष्ठानत्वं सर्वभूतपरायणत्वं च प्रकृत्यैवोपपद्यन्ते ।

३ मोहाकुलितासुरप्रकृतिमतां मूढानां मनुष्यशरीरस्थेऽस्मिन् सर्वभूतमहेश्वरे अनन्तशक्तिमति अव्यये प्रतिपत्त्यभावात्तदवज्ञानाज्ज्ञानवैकल्यं चेष्टावैफल्यं नैराश्यं वैचित्त्यं चोपजायते ।

४ देवप्रकृतिमतां तु विशुद्धान्तःकरणानां महात्मनां दैव्या प्रकृत्यावभासितेऽस्मिन्नव्यये क्षराक्षरविकारवैशिष्ट्येन नानात्वबुद्ध्या, तदुपहितत्वेन त्वेकत्वबुद्ध्या प्रतिपत्तिसंभवाज्ज्ञानयज्ञादिभिरनेकधोपासनार्थं प्रवृत्तिः ।

५ पृथक्त्वेन गृहीतस्याव्ययस्यैकत्वेन भावनयोपासना ।

६ द्वादशलक्षणत्वेनैकस्याव्ययस्योपासना ।

७ विश्वकर्म्मत्वेनैकस्याव्ययस्योपासना ।

८ स्वर्गतिं कामयमानैस्त्रयीधर्म्मवद्भिर्यज्ञद्वाराऽव्ययोपासना ।

९ अन्यभक्ताव्ययभक्तयोरन्ययाज्यव्यययाजिनोः सर्वविधसर्वोपासनानामव्ययैकपर्य्यवसायित्वेऽपि सर्वयज्ञभोक्तृतमैतदव्ययथार्थ्यानभिज्ञानां देवपितृभूतादियाजिनां देवपितृभूतादिमात्रस्थानावगाहित्वमुपपद्यते, न त्वेवाव्ययपरमधामावगाहित्वं संभाव्यते, "यथा क्रतुरत्रोपास्ते तथाऽमुत्र संपद्यते" इति श्रौतसिद्धान्तात् ।

१० सर्वकर्म्मार्पणभक्तियोगेनाव्ययोपासनायाः कर्म्मबन्धनिवर्तकत्वम् ।

११ अव्ययानन्यभक्तिमाहात्म्यम् ।

**२—नानाविभूतिविज्ञानोपनिषत् ।**

१ भूताभिमानिनोऽव्ययस्य यौ विभूतियोगौ, तयोर्ज्ञानस्य यत्नसाध्यत्वं सर्वपापप्रणाशकत्वं च ।

२ अव्यययोगानुभाविता अध्यात्मं मानसाः स्वभावविशेषाः ।

३ अव्यययोगानुभाविता अधिदैवतं मानसा दिव्यभावविशेषाः ।

४ अव्ययस्य वक्ष्यमाणाया विभूतेः कथितस्य च योगस्य संवेदनफलश्रुतिः ।

५ अव्ययसाक्षात्कारौपयिकस्य बुद्धियोगस्य प्राप्तेरुपायभूता वृत्तयः ।

६ अव्ययात्मनो दिव्यविभूतिजिज्ञासया प्रश्नः ।

७ अव्ययस्य दिव्यविभूतिप्रदर्शनोदाहरणानि ।

८ अर्जुनस्याव्ययवैश्वरूप्यदर्शनाकाङ्क्षा ।

९ विश्वरूपदर्शनाय भगवतार्जुनाय योगविद्याप्रभावेण दिव्यचक्षुःप्रदानम् ।

१० वासुदेवशारीरकाव्यये ईश्वराव्ययवैश्वरूप्यदर्शनम् ।

११ अर्जुनकृता ईश्वराव्ययस्तुतिः ।

१२ अर्जुनं प्रति भगवदनुग्रहवाक्यम् ।

१३ पुनरर्जुनकृता भगवत्प्रार्थनास्तुतिः ।

१४ पुनरर्जुनं प्रति भगवदनुग्रहवाक्यम् ।

१५ ईश्वररूपप्रदर्शनोत्तरं पुनर्मानुषरूपप्रदर्शने अर्जुनाश्वासनार्थः कृष्णार्जुनसंवादः।

**३–उपासनोपनिषत् ।**

१ अव्ययोपासनाऽक्षरोपासनयोर्विवेकजिज्ञासा।
२ अक्षरोपासनापेक्षया अव्ययोपासनायाः श्रेष्ठत्वे भगवत्संमतिः।
३ अक्षरोपासनाया अव्ययप्रापकत्वेऽपि अव्ययापेक्षया अक्षरोपासनायां क्लेशाधिक्यादवरत्वम्।
४ अक्षरापेक्षया अव्ययोपासनाया अनायासेनाविलम्बेन च परमपुरुषार्थप्रदायित्वाच्छ्रेयस्त्वम्।
५ अव्ययोपासनाऽनुकल्पप्रकारचतुष्टयविकल्पेषु अभ्यास-ज्ञान-ध्यान-फलत्यागेषूत्तरोत्तर-श्रेयस्त्वम्।
६ अव्ययात्मनः परमप्रसादे हेतुभूता भक्तिप्रकाराः।

## ४–चतुर्थ्यामार्षविद्यायाम्

**१–षड्विज्ञानोपनिषत् ।**

१ प्रकृतिपुरुषयोः,क्षेत्रक्षेत्रज्ञयोः,ज्ञानज्ञेययोश्च,त्रिविधयोरात्मद्वन्द्वयोःस्वरूपज्ञानार्थाःषट् प्रश्नाः।
२ क्षेत्रक्षेत्रज्ञविवेकः।
३ क्षेत्रसंस्थानलक्षणम्।
४ ज्ञानस्वरूपलक्षणम्।
५ ज्ञेयमात्मस्वरूपम्।
६ प्रकृतिपुरुषविवेकः।
७ पुरुषोपासनाभेदाः।
८ प्राणिमात्रस्य क्षेत्रक्षेत्रज्ञसंयोगोपाधिकत्वम्।
९ क्षेत्रस्थितक्षेत्रज्ञपुरुषस्वरूपोपपादनम्।

**२–त्रैगुण्योपनिषत् ।**

१ क्षेत्रज्ञे विशेषाधायकस्य गुणत्रयसमष्टिरूपस्य प्रकृतिभूतस्य महतो लक्षणम्।
२ गुणत्रयस्वरूपनिरूपणम्।
३ गुणातीतस्य विदेहात्मनो लक्षणम्।
४ गुणात्ययोपायद्वारा त्रिगुणातीतस्य ब्रह्मसायुज्यावाप्तिः।
५ सृष्टं प्रविष्टं प्रविविक्तमितीत्थं ब्रह्मत्रैविध्ये गुणत्रयातीतस्य प्रविविक्तब्रह्मणो निर्विशेष-परात्परपुरुषत्रयसाधारणप्रतिष्ठारूपत्वसिद्धिः।

**३–अश्वत्थोपनिषत् ।**

१ ब्रह्माश्वत्थ-कर्म्माश्वत्थभेदादश्वत्थद्वैविध्येऽपि ब्रह्मकर्म्मणोरपृथक्त्वेनाश्वत्थयोरपृथक्त्वा-देकस्य कर्म्माश्वत्थस्यैव त्रैगुण्योपपन्नकर्म्मप्रपञ्चमयवैश्वरूप्यस्याद्धोपलभ्यमानतया तं निरस्य तदालम्बनभूते हेयप्रत्यनीके जगदीश्वरनाम्नि परमाव्यये ब्रह्माश्वत्थेऽभिनिवेशायोपदेशः।
२ गुणकर्म्मप्रपञ्चोपाधिशून्यस्य विशुद्धस्य तदश्वत्थाव्ययस्य साक्षात्कारोपायः।
३ परमाव्ययस्यैवाध्यात्मिकत्वौपाधिकजीवाव्ययत्वोपपत्तिः। प्रतिशरीरं गुणत्रयोपाधि-भिन्नानां जीवाव्ययानामद्वितीयैकाश्वत्थाव्ययनानाप्रतीकमात्रत्वम्, आध्यात्मिकानुपाय-ग्राहित्वं च।

८

४ अश्वत्थाख्यपरमाव्ययस्य जीवाव्ययत्वोपपत्तौ महतो गुणत्रययोगाद् भोक्तृत्वसिद्धिः।

५ महद्विशेषानधितिष्ठतोऽश्वत्थाव्ययस्य विभिन्ननामरूपगुणकर्म्मवत्त्वम्। एकस्यैवाश्वत्थाव्ययस्य प्रत्यर्थं गुणत्रयोपाधिभेदात् कर्म्मभेदाः।

६ औपाधिकभेदस्य तुच्छतया सर्वेषां जीवाव्ययानां परमाव्ययानतिरेकादेकात्मत्वम्। तस्यैकस्यैवाश्वत्थाव्ययस्य प्रतिजीवशरीरं भेदेन तटस्थलक्षणम्।

७ एकस्यैवाश्वत्थाव्ययस्य प्रत्यर्थं कर्म्मभेदप्रयोजकगुणत्रयोपाधिभिन्नाभ्यां क्षराक्षराभ्यां प्रकृतिभ्यां भेदोपचारोपपत्तिः।

**४—दैवासुरसंपद्विभागोपनिषत्।**

१ जन्मसिद्धनैसर्गिकदेवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धसहजगुणकर्म्मानुबन्धाः।

२ दैवासुरभेदाद् द्विविधे भूतसर्गे आसुरसर्गानुगतानि विद्यानिरपेक्षाणि गुणकर्म्माणि।

३ आसुरसंपन्मूलकानां कामक्रोधलोभानां नरकद्वारत्वम्।

४ विद्यासमुच्चितकर्म्मप्रतिपत्त्यर्थं वेदादिशास्त्रप्रामाण्यादेशः।

**५—गुणकर्म्मप्रचयोपनिषत्।**

१ सर्वविधव्यवहारात्मक-लोकयात्राहेतुभूतायाः श्रद्धाया गुणत्रयनिष्ठाभेदात् त्रैविध्यम्।

२ गुणत्रयवृत्तिभेदादाहारत्रैविध्यम्।

३ गुणत्रयवृत्तिभेदाद् यज्ञत्रैविध्यम्।

४ कायवाङ्मनोऽधिष्ठानभेदात् तपस्त्रैविध्यम्।

५ गुणत्रयवृत्तिभेदात् तपस्त्रैविध्यम्।

६ गुणत्रयवृत्तिभेदाद् दानत्रैविध्यम्।

७ विद्यासमुच्चितकर्म्मसु यज्ञतपोदानेषु "ओं तत् सद्" इति ब्रह्मनिर्देशत्रैविध्यम्।

८ कर्म्मसंन्यासत्यागयोर्विवेके नानामतेषु भगवत्सिद्धान्तमतानुसंस्रवः।

९ गुणत्रयवृत्तिभेदात् त्यागभेदाः।

१० कर्म्मयोगिनां कर्म्मफलत्रैविध्यम्। कर्म्मसंन्यासिनां कर्म्मफलोदयाभावः।

११ कर्म्मसिद्धिहेतूनां पाञ्चविध्यम्।

१२ ज्ञानत्रिपुटी-कर्म्मत्रिपुटीषट्कस्य कर्म्मस्वरूपनियामकत्वम्।

१३ कर्म्मस्वरूपनियामकेषु ज्ञानकर्म्मकर्तॄणां प्रत्येकस्य गुणत्रयवृत्तिभेदात् त्रैविध्यम्।

१४ ज्ञानम्।

१५ कर्म्म।

१६ कर्त्ता।

१७ बुद्धेः, धृतेश्च गुणत्रयवृत्तिभेदात् त्रैविध्यम्।

१८ धृतिः।

१९ गुणत्रयवृत्तिभेदात् सुखत्रैविध्यम्।

२० त्रैगुण्यवृत्तीनां सर्वभावव्यापित्वेनोपसंहारः।

**६—अत्याज्यकर्म्मोपनिषत्।**

१ अथाधिकारसिद्धसांस्कारिकदेवासुरसंपत्तिनिबन्धनाः स्वभावसिद्धस्वीयगुणकर्म्मानुबन्धाः।

२ दोषवतामपि स्वकर्म्मणां सहजकर्म्मणां च परित्यागप्रतिषेधः।

**७–कर्म्मानावरकत्वोपनिषत् (अनावरणकर्म्मोपनिषत्) ।**

१ अनासक्तस्य फलवासनाशून्यस्य संन्यासिनः कर्म्मकरणेऽपि नैष्कर्म्यसिद्धिः।

२ नैष्कर्म्येण ब्रह्मभूतस्य विदेहावस्थां गतस्य सर्वविधकर्म्मकरणेऽपि सद्योमुक्तिसिद्धिः।

## उपसंहारे

**१–गीतासारोद्धारोपनिषत् ।**

१ पूर्वाचार्यपरम्परासिद्धकर्म्मविद्याचतुष्टयोपदेशानन्तरमन्ते विद्याचतुष्टयनिष्कर्षे विवक्षिते प्रथमायास्तावद् वैराग्यबुद्धियोगविद्याया निष्कर्षरूपेण आत्मनिर्भरताया आदेशः।

२ अथ द्वितीयस्या ज्ञानबुद्धियोगविद्याया निष्कर्षरूपेण स्वभावसिद्धायाः स्वकर्म्मप्रवणताया आदेशः।

३ अथ चतुर्थ्या धर्म्मबुद्धियोगविद्याया निष्कर्षरूपेण प्रकृतिसिद्धकर्म्मकर्तव्यताया आदेशः।

४ अथैश्वर्य्यबुद्धियोगविद्याया निष्कर्षरूपेणान्तरात्मप्रेरितकर्म्मनिष्ठताया आदेशः।

**२–उद्धारोद्धारोपनिषत् ।**

१ अथोद्धारचतुष्टयादप्युद्धृत्येदानीं सर्वनिष्कर्षरूपेण राजविद्योपदिष्टाया अनन्यभक्तियोग-रूपाया आत्मशरणागत्युपासनाया आदेशः।

**३–फलश्रुत्युपनिषत् ।**

१ विद्याचतुष्टयात्मकभगवद्गीतार्थभावनाप्रवणत्वप्रशंसा।

२ भगवद्गीताध्ययनश्रवणयोः फलश्रुतिः।

३ इतिहासप्रकरणे विज्ञानप्रकरणस्योपसंहारः।

**एतावदिह गीतायाः स्वरूपमनुवर्णितम्।**
**संक्षेपाद्, विस्तरस्त्वस्य परतो दर्शयिष्यते॥**

**इति गीतायां विद्योपदेशविभागाः॥**

**गीता-विषयतालिका-परिलेखः**

| | प्रकरणानि | उपनिषदः | उपदेशाः | अध्यायाः | श्लोकाः |
|---|---|---|---|---|---|
| १ | चातुर्विद्योपक्रमः | १ | २ (२) | ० | ६ |
| २ | भगवद्विद्या<br>राजर्षिविद्या<br>वैराग्यविद्या<br>सनातनविद्या | १<br>२<br>३<br>४<br>५<br>६<br>७<br>८ | ७ (५०)<br>७<br>७<br>३<br>३<br>५<br>९<br>९ | ६ | २१६ |
| ३ | सिद्धविद्या<br>ज्ञानविद्या | १<br>२ | १० (१९)<br>९ | २ | ५७<br>.... |
| ४ | राजविद्या<br>ऐश्वर्य्यविद्या | १<br>२<br>३ | ११ (३२)<br>१५<br>६ | ४ | १५१<br>...<br>... |
| ५ | आर्षविद्या<br>धर्म्मविद्या | १<br>२<br>३<br>४<br>५<br>६<br>७ | ९ (४९)<br>५<br>७<br>४<br>२०<br>२<br>२ | ६ | १९९<br>...<br>...<br>...<br>...<br>...<br>... |
| ६ | चातुर्विद्योपसंहारः | १<br>२<br>३ | ४ (८)<br>१<br>३ | ० | १०<br>...<br>... |
| ६ | | २४ | १६० | १८ | ६३९ |

**इति गीतोपदेशानुक्रमणिका समाप्ता ।**

**इति विषयरहस्यम् ।**

**इति प्रथमं काण्डं पूर्णम् ।**

